भारतवाणी-प्रकाशनमाला : १७

श्री. बाक्कन्बेप्रणीता

# अमरुशतकलीला

(स्वोपज्ञसंस्कृतकाव्यमीमांसारसग्रहणात्मकविशिष्टकृतिः)



भारतीयप्रशासनशिक्षामन्त्रालयाल्लब्धेन
द्रव्यसाहाय्येनैषा कृतिः प्राकाश्यं नीता ।

प्रकाशकः
प्रा. डॉ. व. ग. राहूरकर
एम्.ए., पीएच्.डी.
भारतवाणी–प्रकाशन–कार्यालयः
१४४२–४३, सदाशिव,
पुणें (पूना) २

… … …

प्राप्तिस्थानम् : मोतीलाल बनारसीदास,
जवाहरनगर, दिल्ली ७.
मेहरचन्द लक्ष्मणदास,
१, अन्सारी रोड्, दरियागञ्ज,
दिल्ली—६, च.

… … …



………

प्रथमावृत्तिः १९६७

मूल्यम् रु. ७–००

मुद्रक :
श्री. दि. दा. गांगल,
लोकसंग्रह मुद्रणालय,
१७८६, सदाशिव, पुणें (पूना) २

# प्रकाशक-निवेदनम्

संस्कृतप्रणयकाव्येषु अमरुशतकं नाम सर्वश्रेष्ठं काव्यम् । प्रणयिनां मनोव्यापाराः, तेषां विविधाः शरीरावस्थाः, उत्तानप्रणयगताः सूक्ष्मच्छटाः इत्यादीनां मनोज्ञं वर्णनम् अस्मिन् काव्ये प्रतिश्लोकं दरीदृश्यते । सप्तशतीकर्तुः हालस्य अपेक्षया अमरुकवेः ईक्षिका सूक्ष्मा गभीरा अन्तरतमभावग्राहिणी च । दीर्घा, नादमधुरा च छन्दोरचना नाम अमरुकवेः वैशिष्ट्यम् । अत एव अमरुशतकं वैविध्यपूर्णं वैचित्र्यपूर्णं च सत् आवर्जयति रसिकानां चेतांसि । आनन्दवर्धनः अत एव 'अमृतकाव्यम्' इदम् इति प्रशंसति । अमरुकवेरेकः श्लोकः प्रबन्धशतायते इति यत् संस्कृतसाहित्यशास्त्रज्ञैः उक्तं तत् न अत्युक्तिकोटीम् आटीकते ।

तदिदं काव्यम् उद्दिश्य स्वोपज्ञा संस्कृतटीका पण्डित-बाक्-कन्बे-महोदयैः कोरियादेशीयैः आरचिता । मेघदूतविलासाख्येन स्वीयग्रन्थेन श्री. बाक् कन्बे महोदयाः न खलु अविदिताः संस्कृतरसिकवृन्दानाम् । तत् संपूर्ण पुस्तकं प्रथमं भारतवाण्याम् अनन्तरं ग्रन्थरूपेण भारतवाणी-प्रकाशनमालायां प्रकाशितम् । इयम् अमरुशतकलीला अपि प्रथमम् अंशतः भारतवाण्यां प्रकाशिता तदनु च ग्रन्थरूपेण भारतवाणी-प्रकाशनमालायाम् । श्री. बाक्-कन्बे-महोदयैः प्रतिश्लोकस्थाः प्रणयभावनायाः प्रतिक्षण-परिवर्तिन्यः छटाः, तासां तमःप्रकाशाधिक्यं, अस्थैर्यं च, तत्रस्थः समयस्फूर्तः अनिश्चितपूर्वः च निर्णयः इत्यादीनां वर्णना स्वीयेन वैशिष्ट्यपूर्णेन वैदुष्येण संस्कृतलेखननैपुण्येन च तथा नाम कृता यथा सा न केवलं सर्वेषां भारतीयानाम् अपि तु निखिलानां विदेशीयानां संस्कृतप्रणयिनां चेतस्सु चमत्कृतिं विदधाति । अलंकारशास्त्रीय विवेचनेऽपि श्री. कन्बेमहोदयानाम् अस्ति कापि चातुरी ।

अमरुशतके सर्वं व्यञ्जनया ध्वनितम् । अतः तत्र ग्राम्यम् अश्लीलं च किमपि न विद्यते प्रणयवर्णने । तदिदं काव्यम् अधिकृत्य श्री. बाक्-कन्बे-महोदयैः विरचिता इयम् अमरुशतकलीला रसिकेभ्यः उपह्रियते ।

व. ग. राहूरकर,
भारतवाणी-प्रकाशनमालायाः
कार्यवाहः

# ग्रंथानुक्रमाणिका

| | पृष्ठसंख्या |
|---|---|
| १. अमरुशतकलीला | १–१२२ |
| २. परिशिष्टम् | १२३–१४६ |
| ३. अमरुशतकश्लोकानुक्रमणी | १४७–१५० |
| ४ पाठान्तरसहितममरुशतकमूलम् | १५१–१७६ |

# अमरुशतकलीला

श्रीबाक्कन्बेप्रणीता

निजदेशं नमस्कृत्य
सस्नेहं न कर्हिचिदपि विस्मृतम् ।
तनोम्यमरुकविलीलां
स्वप्रवासदुःखविनोदाय ॥१॥

कस्य न ह्रियते चित्त-
ममरुकाव्यलीलया ।
लोहवल्लोहकान्तेन
तेन निर्विश्यतामियम् ॥२॥

सर्वजनचमत्कारी
ह विनदतूच्चैरमरुशतकडमरुः ।
संधुक्षितकामाग्निः
पुष्पधनुषो धनुर्घोष इव ॥३॥

नन्वधुनापि वरीवृत्यमानेषु सहृदयरसिकजनमनोहारिषु समस्तलोकप्रशंसितोत्तमकाव्यतापिशुननिर्दोषशाब्दार्थालंकारप्रकृष्टगुणमधुरिमान्वितरसप्रवाहमयेषु कालिदासपुरस्सरैः श्लाध्यकविकुलपताकायमानहंसधवलकीर्तिभिर्महाकविबृन्दारकैः सुनिर्मितेषु शृंगाररसा

त्मककाव्यरत्नेष्वतिविशालविष्णुपदावतंसभूतेष्विव शाश्वतीः समा देदीप्यमानालोकेषु सप्तर्षिप्रमुखेषु नक्षत्रगणेषु समुद्रमन्थनसमुत्थेन त्वगिन्द्रियसुखकरेण शीतलेनापि दुर्निवारमनसिजानलसंधुक्षणक्षमेण हिमांशुनेव कस्य सचेतनस्य विशेषतो हृदयालुशृङ्गारकाव्यामृत-रसास्वादलोलुपस्य सर्वंकषप्रभविष्णुहृच्छयाज्ञावशंवदस्य सौकुमार्य-माधुर्यसौक्ष्म्यादिगुणभूयिष्ठचेतोवृत्तिपरिपूर्णं सुनिर्णीतकाव्यगुण-दोषादेयपरिहार्यत्वं मनो न कामं सुदूरमेव जेह्रीयतेऽ मरुकाभिधानकविपुंगवकाव्यनिबन्धनप्रभावसूत्रितेनाङ्गीकृतपार्थक्य-त्वात् पौर्वापर्यसम्बन्धरहितेनापि पृथक्पृथगेकैकशः श्लोके श्लोके स्वातन्त्र्यशंसिसंपूर्णार्थसमन्वितत्वान्नूनं निर्वाच्यनिबन्धशतायमाने-नापि च 'मुक्तकं श्लोक एवैकश्चमत्कारक्षमः सताम्' इति काव्यादर्शे संदृश्यमाननिर्णयत्वाद्धृदयंगमैः शतसंख्यकैः प्रकाशित-विविधमनोज्ञकुसुमेषुचेष्टैर्मुक्तकैरेव प्रभास्वरैः मुक्ताफलैर्गुम्फितेन मुक्ताकलापेनेव श्लोकशतकेन हृदिस्पृशा को वा प्रबंधसौष्ठवाभिज्ञः प्रगुणकाव्यसौन्दर्यसुदूराकृष्टमनस्को भूत्वापि विभावानुभावव्यभि-चारिव्यक्तीकृतस्थायिभावभूतेषु हास्यकरुणारौद्रवीरादिषु कविता-सुधारसरसिकैः रस्यमाननिजसंवेदनासिद्धेषु रसेषु सर्वजनसुलभतया सुकुमारकुसुमायुधधारिणोऽपि प्रभूष्णोश्चेतोजन्मनः सदैव सर्वत्रैव प्रकटितसुरतलीलस्यातिहृद्यत्वाच्चाग्रेसररसभूतशृङ्गारविलासतत्परं मनोविमोहनसंभोगविप्रलम्भशृङ्गारात्मकं यथाशक्ति प्रयुक्ताभिधा-लक्षणाव्यञ्जनाह्वशब्दार्थशक्तिमाधुर्यादिगुणगणविचित्रालङ्कारम-ण्डितस्वरूपं दिव्यसंगीतसमये स्वभावसुन्दराकृतिविभूषिताप्सरोग-णाभिवाद्यमानोत्कृष्टवीणाध्वनिवन्मञ्जुमञ्जुशब्दायमानमेतदमरु-शतकं श्रावं श्रावं प्रहर्षातिशयेन पुलकितवपुर्न बोभूयादहो केन वापरेणोत्तमशृङ्गारिकाव्यमन्येनापि काव्येनाताद‍ृशेन खलूपमीयते निरुपमप्रबन्धविरचनानैपुण्यप्रदर्शितसौंदर्यमयाकृति निरन्तरप्रवह-

च्छृङ्गारामृतरसनिर्झरसमुक्षितत्वेन स्वादिष्ठमतिमनोग्रहिमनसिशयनानाविधलीलायमानमत एव हृद्यतमं विशेषात् काव्यगुणदोषसमीक्षानिपुणेनालङ्कारिकशिरोमणिना ध्वन्यालोककारेणापि प्रशस्ततरकाव्योदाहरणरूपेण स्वकीयप्रबन्धे बहुश उररीकृत्योद्धृतं दिव्यगन्धर्वविद्यालेशवन्मञ्जुलं मञ्जुलं शोश्रूयमाणं श्रवणसुभगं मान्मथगीतकं लावण्यमयमिव स्वसौन्दर्यगर्वितमकरध्वजविलासांगणमिव सुशोभितमभिनवतारुण्यावतरणमिव प्रमोदोत्फुल्लनेत्रं मनोमोहिशृंगारसर्वस्वनिर्मितस्वरूपमिव संदरीदृश्यमानमन्तःसुस्वादुमधुरिमबाहुल्येन नूनममृतायमानं बहिश्च सौम्यसौन्दर्यविभूषिताकृतिविशेषशालित्वेन बत जनानां मनःसु प्रमोदशतायमानममरुकविशार्दूलविरचितं मुक्तकशतसूत्रितं काव्यरत्नमिदं येन विकसितप्रहर्षोत्फुल्लनयनाधिज्यकार्मुकमन्मथलीलापुष्पोऽतृप्तचुम्बना – लिङ्गनपुरस्सरबहुविधसुरतबन्धासक्तयौवनौन्मत्तप्रणयिद्वन्द्वमान्मथविलासाह्लादितरसिकजनहृदयोऽसारे संसारेऽपि निष्पादितकामनामकप्रधान–पुरुषार्थसिद्धिसफलीकृतजीवीतसौख्यः संभोगशृङगारो विचित्रचित्रवद् वर्ण्यते यत्र चेष्टजनसमागमसुखलोभजनितापूर्णमनोरथौत्सुक्यमनोविकारव्यथाभूयिष्ठः प्रणयेर्ष्यामूलककलहजविप्रयोगोत्थशङ्कानुशयाङ्गग्लानिसंतापातिशयशंसी देशान्तरप्रयाणादिकजनित—परस्परविरहानलतातप्यमानहृदयसूचितोत्कलिकाप्रायो हा जीवितेश हा वल्लभे कदा पुनः प्रणयिनोरावयोः समागमो भविष्यतीति पृथक्पृथग्विश्लेषितस्य साश्रुवदनस्य वियोगसंतापदन्दह्यमानसर्वात्मनः प्रणयिमिथुनस्य निर्वेदशोकपूर्वकप्रलापचिह्नितोऽभिलाषमानप्रवासरूपी विप्रलम्भशृङ्गारो दयालूनामस्माकं हृदयान्यन्तर्बाष्पधारासंपातेन न खलु नार्द्रीचरीकर्ति यच्चान्तरात्महर्षयित्नुप्रेमरसनिष्यन्दोत्कर्षहेतुभूतनिर्दोषगुणालंकारसुषमाशोभितशब्दार्थसंनद्धत्वात् परमार्थतः काव्यविदां साहित्यप्रबन्धचर्वणतत्परा-

णामानन्दजनयितृ निसर्गनिर्मलोज्ज्वलमुक्ताफलग्रथितहारवत्स्वभावरुचिरनिजाकारशोभिमुक्तकशतगुम्फितत्वात् सदैव नयनोत्सवप्रदमतिमञ्जुलरागरागिणीतरङ्गितगन्धर्वविद्यावन्मनोहररागमयशृङ्गारिपदतरङ्गतरलितत्वात् सर्वदैव श्रवणविवरप्रह्लादनं च बोभवीतीति कोऽत्र संदेहो यस्माच्च नैरंतर्येण पनीपत्यते शृङ्गारजलप्रवाहे सिष्णाषूणां कृते मान्मथमदनिर्झरोऽनवरतं च चेक्षिप्यन्ते कामुकजनान् लक्षीकृत्य सुकुमारपुष्पमया अपि निष्ठुराः पञ्चशरपञ्चशराः पौनःपुन्येन च शोश्रूयन्ते सावधानश्राव्याणि निधुवनसमये मामाशब्दपूर्वकसीत्कारसहितभणितानि सुरतनिरतानां विलासिनीनां, किंबहुना, यस्माच्चामूल्ययौवनप्रमोदप्रकर्षपरिपूर्णः शृङ्गारशेवधिर्निर्व्याजमणिसमूहनिराकुल आकर इव संजाजायते यस्य च प्रणेता पुण्यश्लोकः शाश्वतिककीर्तिमयूखजाज्वल्यमानप्राक्तनभारतीयकविकुलचूडारत्नायमानोऽमरुरितिनाम्ना प्रसिद्ध आत्मकीयकाव्यश्रवस्यवशात्तत्त्वतो मर्त्यधर्माप्यमरयशस्कोटिं समारुरोह तथाप्ययं कविवृन्दारकः कस्मिन् समये स्वजनुषा सह प्रादुर्बभूव कतमं वा भारतवर्षीयभूमण्डलं नन्वात्मना विमण्डयामासेति जिज्ञासायां सत्यामपि सुष्ठु निर्णेतुं न शक्यते किन्तु यतः काव्यालंकारसूत्रवृत्तिप्रणेत्रा वामनाख्यालंकारिकेण ख्रिस्तसांवत्सराष्टमशतकसमुत्पन्नेनास्य शतकाद् द्वित्राः श्लोकाः समुद्दध्रिरे 'मुक्तकेषु हि प्रबन्धेष्विव रसबन्धाभिनिवेशिनः कवयो दृशयन्ते तथा ह्यमरुकस्य कवेर्मुक्तकाः शृङ्गाररसस्यन्दिनः प्रबन्धायमानाः प्रसिद्ध इव' इति प्रशंसता नवमशताब्दकालीनेन ध्वन्यालोककारेणानन्दवर्धनेनापि चानल्पसंख्यकास्तदीयश्लोका उदाजह्रिरे ततो नूनमयं कविः ख्रिस्ताब्दीयाष्टमशतकात् प्राचीन इति कथंचिदनिश्चितमेवानुमीयतेऽपि च तदीयशतकस्य लोके सुप्रसिद्धत्वान्नूनं प्रोद्भिन्नाविश्वसनीया यादृशी किंवदन्ती कर्णाकर्णि संप्रत्यप्यनुश्रूयते यद् दिग्विजयप्रयाणस्थेन शंकराचार्येण

दार्शनिकविवादे निर्जितस्य मण्डनमिश्रनाम्नो विख्यातमीमांसकस्य शारदानाम्न्या भार्यायाः कामशास्त्रविषयकप्रश्ने त्वात्मन आजन्म-ब्रह्मचारित्वेनापरिचितानङ्गरहस्येन सपदिप्रतिवक्तुमसमर्थेन स्वाल्प-ज्ञतालोकप्रतीतिपरिजिहीर्षयैव मासमात्रं तत्प्रश्नोत्तरदानावधिं कृत्वाचिरेण पञ्चतां यातस्यामरुकाभिधस्य कस्यचिद् भूपतेः कलेवरे परकीयदेहप्रवेशनशक्तिप्रयोगात् प्रविश्य प्रमुदितान्तः पुरवरारोहा-भिर्विचित्रमनोज्ञसंभोगसुखान्यनुभूय ततः परिचितकामतत्त्वेन सम्यगु-पलब्धपुष्पधन्वपरिगूढरहस्यमर्मणा तेन संन्यासिवरेणैतच्छतकं निर-मायीति तादृश्यामसंबद्धायां विवेकदृश्वनां परिहासास्पदभूतायां कस्यचिदप्यविद्यमाने सति विश्वासावकाशलेशे यो वा को वासावमरुः स्वकीयशतकरत्नस्य सर्वैः काव्यमीमांसकप्रमुखैः श्रेष्ठकाव्यस्थाने समारोपितत्वाच्छृङ्गारिकाव्यकृतां वरण्योऽस्माभि-समादर्तव्यो यथा कालिदासभवभूतिबाणभर्तृहरिभारव्यादयो महाक-विकुञ्जराः रघुवंशमालतीमाधवकादम्बरीशतकत्रयीकिरातार्जुनी-यादीनां स्वस्वकृतीनां सुविख्यातानां वशादेव प्रभास्वरकीर्तिभाजोऽभू-वन् किलेति सर्वथा विचारं विचारं विकसिताद्भुतमान्मथकेलिसुम नोवृन्दं गाढनिगूढासूर्यंपश्यकंदर्परहस्यशेवधिगह्वरं सान्द्रप्रेमरससंसि-क्ततारुण्यमधुमत्तनरीनृत्यमानस्त्रीपुंसजेगीयमानमीनकेतनसाम्राज्यं क्वचित् प्रमोदप्रदेन संभोगसौख्येन सानन्दाश्रु क्वचिच्छोकानलोद्दी-पकेन विप्रलम्भदौर्भाग्येण सदैन्यबाष्पं कर्हिचिदन्योन्यसंगमेन संजात-पुलकं कर्हिचित् परस्परविरहेण निर्विण्णमिव निदाध्यायमानमेतदी-यशतकं विवृत्यातिमधुरशृङ्गारसुधासारासिस्वादिषया मधुलेन मधुना मधुलिह इव स्वयमेव स्वैरं स्वैरंमाचरीकृष्यमाणाः परित्यक्तान्यव्या-पाराः सन्तः कियत्कालक्षेपेणातिहृद्यमान्मथामृतरसपानसुखमुपभुन-जामहै यथा बुद्बुदवत्क्षणनश्वरे जीवलोकऽस्मिन् फल्गुनि शृङ्गारवर्जं किमप्यन्यत् सारवत्तरं नु न भवति हि ।

अथो प्रारंभे निर्विघ्ननिजप्रबन्धसृष्टिकार्यपरिसमाप्तीप्सुना नः कविनाशीर्युगलं प्रयुज्यते ।

ज्याकृष्टिबद्धखटकामुखपाणिपृष्ठ–
प्रेङ्खन्नखांशुचयसंवलितोऽम्बिकायाः ।
त्वां पातु मञ्जरितपल्लवकर्णपूर–
लोभभ्रमद्भ्रमरविभ्रमभृत्कटाक्षः ॥

कोदण्डशिञ्जिनीकर्षणाय तर्जनीमध्यमामध्यगतस्य पुंखस्यानामिकाङ्गुलीसंयोगादङ्गुष्ठेन पीडनार्थं सन्निवेशितस्य खटकामुखाकारभाजो हस्तस्योर्ध्वभागे चपलायमानेन धवलकरजमयूखजालेन कर्बुरितं तथा मुकुलितकिसलयमयकर्णावतंसाय स्पृहया भ्रमणं कुर्वतः षट्पदस्य विलासमुद्वहच्छंभुवल्लभायाः पार्वत्या अपाङ्गवीक्षणं (कर्तृ) त्वां रक्षतादित्यत्र चतुर्थपादे श्रुतिवैचित्र्यनिष्पादनार्थमेव भ्रम-भ्रम-भ्रमेति व्यञ्जनावृत्तिमूलकः काव्यशोभाहेतुकः शब्दालंकारोऽनुप्रासः प्रयुक्तः पुनश्चात्र ललितविभ्रमशालिसितेतरभ्रमरकटाक्षयोरुज्ज्वलधवलनखांशुमञ्जर्योः कोमलारुणपाणिपल्लवयोश्च परस्परसादृश्यसाधर्म्यप्रतीतिसंपादनेन कल्पितोपमा नामार्थालंकारोऽपि प्रदर्शितो यथेष्टं विशेषणैरुपमेयं परिकल्प्य तादृशमेव सिद्धमुपमानमुपात्तमिति लक्षणात् । वृत्तं तु वसन्ततिलका । शृंगारैकरसकाव्य–प्रारम्भे किमर्थं वीररसाभासशंसिनी शंभुप्रियाया अधिज्यधनुराकृष्टिचेष्टा व्यक्तीकृतेति जायमानाशङ्के संशये ब्रूमो यत् पूर्वतो ज्याकृष्टिद्वारा किंचिदाविर्भवन्नपि वीररसलवः स्वप्राणेश्वरमर्धेन्दुमौलिं प्रति ललितमान्मथलीलायमानेन सान्द्रप्रमार्द्रहृदयाया गिरिजाया मनोज्ञतरशृङ्गाररसव्यञ्जकेन कटाक्षेण तिरस्क्रियत उत्तरत्र

च शृङ्गाररसस्वरूपाया वश्यमुखीवेषधारिण्यास्तस्याः कुसुममार्गण-सहितैक्षवधनुर्धारणं सुप्रसिद्धमेव पुनश्च तथाभूता पार्वती कविनात्र विवर्णयिषितेति।

**क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं**
**गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण।**
**आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः**
**कामीवार्द्रापराधः स दहतु दुरितं शांभवो वः शराग्निः॥**

अन्यस्त्रीगमनेन सद्योऽपराद्धः कामुक इवावलोलोक्यमानस्तासां करावसक्तोऽसह्यमन्युजबाष्पधाराजर्जरितेन्दीवरवच्छोभननयनशालिनीभिस्त्रिपुरवास्तव्यदैत्यवनिताभिर्निरस्तोऽपि वस्त्राञ्चलमवलम्बमानो बलात्कारेण ताडितस्ततः शिरोरुहपाशेषु संश्लिष्यन्नपहृतस्तदनन्तरं विहितपादनिपतनोऽपि संक्षोभवेगेन नावलोकितस्तत आलिङ्गनं विदधदपाकृतस्तादृशः पाशुपतविशिखवह्निर्युष्माकं कल्मषं दहनेन विनश्यतु। श्लोकेऽस्मिन्नुभयोरार्द्रापराधकामिरौद्रशरानलयोरत्यन्तनिर्वारसंतापप्रकर्षोत्पादकत्वेन समानभावे खलूपमितत्वात् साम्यं नामालंकार उपमालंकारो वात्र चैकार्थवाचकानां हस्तावलग्नेत्यादीनां पदानामनेकार्थद्योतकोऽर्थश्लेषोऽपि व्यक्तीकृतो येनात्र सद्यःकृतपरवनितासंगमरूपापराधमत एव यथाकथंचिन्निजवल्लभासान्त्वनार्थमेव हस्तावलम्बनकेशग्रहपुरस्सरचरणनिपतनादिचेष्टननिमग्नं कामिनमुद्दिश्य क्षिप्तोऽवधूत इत्यादिना दानवविलासिनीनामीर्ष्यामानहेतुको विप्रलम्भशृङ्गारः प्रकटीकृतोऽत्र च पुरा विश्वकर्मप्रख्यमयासुरनिर्मितत्रिपुरविध्वंसार्थे दिविषद्भिः प्रार्थितस्यातिभयानकाशुगानलभस्मसात्कृतासुरपुरत्रयस्य पिनाकिनो

वीर्यप्रतापोत्कर्षव्यञ्जको वीररसः साश्रुनेत्रोत्पलाभिरितिशब्देन च दानवेन्द्रवरवर्णिनीनां दयितजनविनाशजनितमन्युसूचकः करुणारस इत्येभिः संकीर्णैरपि परस्पराविरुद्धैः रसैरर्थश्लेषेण साकं रसवदलंकारमयाङ्गभावेन प्राधान्यभूतस्य वाक्यार्थस्योपबृंहणं विदेधीयते। वृत्तं स्रग्धरा। न केवलं काव्यग्रन्थशतायमानमपि तु रसवत्काव्यरसग्रहाणां मनांसि चित्रीयमानं श्लोकमिमं पाठं पाठं चित्रेऽर्पितस्येव वराकस्यापरवनिताभिगमनेन दुर्निग्रहेर्ष्यामानारुणीकृतनयनोत्पलां स्वप्रियां तच्चरणनिपतनादिभिरुपायशतैः सानुनयं सान्त्वयितुं यतमानस्यापि दुर्मनायमानया तया भृशमुपेक्षितस्य कामिनोऽवस्थां शोचनीयामुत्प्रेक्षितुं कथं न शक्नुमः ?

**आलोलामलकावलीं विलुलितां बिभ्रच्चलत्कुण्डलं**
**किंचिन्मृष्टविशेषकं तनुतरैः स्वेदाम्भसः शीकरैः।**
**तन्व्या यत्सुरतान्ततान्तनयनं वक्त्रं रतिव्यत्यये**
**तत्त्वां पातु चिराय किं हरिहरस्कन्दादिभिर्दैवतैः ॥ १ ॥**

पुरुषायितनिधुवनसमये चटूल्लोलां व्याकीर्णां चिकुरमालां दधानं चञ्चलकर्णावतंसभृत् सूक्ष्मतरैः श्रमजलकणैरीषन्मृदितभालतिलकशालि सुरतिपर्यवसान श्रमालसलोचनं तनुमध्याया वरारोहाया यद्वक्त्र तत्त्वां चिरकालं रक्षतु, शिवविष्णुकार्तिकेयपुरस्सरैर्निर्जरैः किं प्रयोजनम् ? ननु संसारेऽसारे परमसुखदायिनि विकस्वरलावण्यविकाशिनि ललितरम्भोरूमुखेन्दौ विद्यमाने सत्यविद्यमानेऽसंभाव्ये परलोके मृगतृष्णिकासदृशमनोरथसिद्धिसंपादकैः महेशप्रमुखैः किं प्रयोजनं भवेत् तस्माच्छृङ्गाररसनिष्यन्दिन्यः पीनस्तन्यो नितम्बिन्य एव सेव्या इत्युपदिशत्यत्र श्लोके प्रागल्भ्यातिशयं गताया वीतव्रीडायाः कृशाङ्गयाः पुरुषायितसुरतवर्णनात् संभोगशृङ्गाररसो

बहुशः प्रवहत्यत्र च पुरुषायमाणायास्तस्याः स्वाभाविकक्रियाप्रदर्शनात् स्वभावोक्तिर्नामालंकार उपनिबध्यते । वृत्तं तु शार्दूलविक्रीडितम् ।

**अलसवलितैः प्रेमार्द्रार्द्रैर्मुकुलीकृतैः**
**क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङमुखै ः ।**
**हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः**
**कथय सुकृती कोऽयं मुग्धे त्वयाद्य विलोक्यते ॥ २ ॥**

अपरिचितं युवानं प्रति प्रथमानुरागाङ्कुरं रुचिरैः साभिप्रायैरपाङ्गवीक्षणैर्दर्शयन्तीं कामपि युवतिं प्रति सख्या नर्मगर्भा प्रौढोक्तिरियम् । अभिनवयौवनसुलभकातर्यत्रपातिशयेन मन्दमन्दसाचीकृतैरन्तरनुरागद्रवीकृतमनस्कत्वाद् बहिर्निर्गतस्नेहनिर्झरस्नापितैर्दर्शनप्रीत्या पौनःपुन्येन स्तोकनिमीलितैस्तथापि विलोकनपरमानन्दानुबुभूषया मुहूर्तं संमुखीकृतैः प्रथममुकुलितप्रेमवशात् सुकुमारकन्यास्वभावजनितव्रीडाकातरैस्तथाप्यवलोकनैरन्तर्यलोभादुन्मेषतत्परहृदयकूपस्थापितं रागसंकल्पं निष्यन्दयद्भिरिवोपलक्ष्यमाणैर्वीक्षणैरधुना त्वया विशेषेण योऽवलोक्यतेऽयं समुदितसौभाग्यः कः ब्रूहि हे मुग्धे ।

प्रथमानुरागपिशुनचक्षुःप्रीतिस्मेरमनस्काया युवत्याः प्रथमावस्थां सूचयति चारुणि पद्येऽस्मिन् सुकृतीति स्पृहणीयेन किंचिन्नर्मस्फोटद्योतकेन पदेन प्रथमकालोन्मिषत्स्मेरस्मरपुष्पैर्दर्शनस्पृहोल्लासिभिर्हृत्सौख्यदायिभिर्लज्जाकातर्याभिलाषादिनानाभावकर्बुरितहृदयया कमनीयया बालया मञ्जुलेक्षणेन्दीवरैर्लक्षीकृतस्य यूनो धन्यभावः प्रकर्षेण प्रशंसितः पुनश्च मुग्धे इति संबोधनशब्देन स्तोकनर्मगर्भेण वक्त्र्याः प्रौढोक्तिव्यक्तीकृतार्थशक्ति-

व्यङ्ग्येन यस्मादेवं मुग्धा त्वं सौभाग्यभाजं दर्शनीयाकृतिं युवानं साभिलाषं सुचिरं पश्यसि तस्मान्मुग्धापि खल्वमुग्धासीत्यर्थान्तरमपि व्यज्यते। अन्यथानुपपादनीयेनावलोकनव्यापारेण प्रस्तुताया युवत्या अनुरागरूपस्य जिज्ञासितार्थस्य प्रतीतिवर्णनादनुमानं नामालंकारोऽत्र दृश्यते। वृत्तं तु हरिणी।

**अङ्गुल्यग्रनखेन बाष्पसलिलं विक्षिप्य विक्षिप्य किं**
**तूष्णीं रोदिषि कोपने बहुतरं फूत्कृत्य रोदिष्यसि।**
**यस्यास्ते पिशुनोपदेशवचनैर्मानेऽतिभूमिं गते**
**निर्विण्णोऽनुनयं प्रति प्रियतमो मध्यस्थतामेष्यति॥ ३॥**

बहिर्दर्शितानुरागेणापि सदा वनितान्तरलालनादिमानसव्यथाजनकविप्रियशतमाचरता सुपरिशीलितशाठ्येन स्वकीयकामुकेन वञ्चितत्वादीर्ष्यासूयाकोपातिशयेन रोदनं चेक्रीयमाणां नायिकां तेन कामिनेत्थं कुर्विति रहसि शिक्षिता काचित् सहचर्यागत्य भेदसंज्ञकोपायद्वारा मानं परित्याजयितुमेवमभिभाषतेऽयि क्रोधनेऽङ्गुल्यग्रकररुहेणाश्रुपातं मुहुर्मुहुरपनायमपनायं किमर्थमशब्दं क्रन्दसि? परसुखदर्शनविद्वेषिणां प्रणयिद्वन्द्वभेदकृतां कर्णेजपानां द्विजिह्वानां दुर्जनानां दुष्टोपजापपैशुन्यप्रलापैर्यस्यास्तवेर्ष्याजनिते माने मर्यादामुल्लङ्घिते सति सान्त्वनं प्रति मोघीभूतमनोरथत्वान्नैराश्यं गमितो वल्लभो यदा त्वां प्रत्यौदासीन्यं प्राप्स्यति तदा दूरीभूतस्य तस्य पुनर्लाभाभावादतिमात्रं मुक्तकण्ठं सनिर्वेदं नूनमाक्रन्दिष्यसीत्यत्र युवयोः परस्परासक्तयोः प्रणयिनोः स्नेहद्रोहिषु पिशुनकर्णजापेषु विद्यमानेष्वपि तस्यापराधपरमाणुरपि न वेविद्यते तस्माद्धेतोरकारणेर्ष्याजं क्रोधरूपं प्रणयमानं जहीहि, यदि स्वमौर्ख्येन मानं न जह्यास्त्वं तर्हि त्वदनुनये निराशेन तेन संत्यक्ता सती गतिहीना भवेरिति

भावोऽपि सूचितोऽत्र च 'गच्छ गच्छसि चेत् कान्त तत्रैव स्याज्ज–निर्मम' इत्युदाहरणवत् किं तूष्णीं रोदिषि बहुतरं फूत्कृत्य रोदिष्यसीति विधौ व्यक्तीकृतेऽपि मा रुदिहीति निषेधस्य तिरोहितत्वादाक्षेपो नामालंकारः प्रणयमानरूपेण विप्रलम्भशृङ्गाररसेन परिपोषितो देदीप्यते। वृत्तं तु भवति शार्दूलविक्रीडितम्।

**दत्तोऽस्याः प्रणयस्त्वयैव भवतैवेयं चिरं लालिता**
**दैवादद्य किल त्वमेव कृतवानस्या नवं विप्रियम्।**
**मन्युर्दुःसह एव यात्युपशमं नो सान्त्ववादैः स्फुटं**
**हे निस्त्रिंश विमुक्तकण्ठकरुणं तावत्सखी रोदितु ॥४॥**

शाठ्यग्रस्तेनानेकस्त्रीचौरेण कामिना निष्पादितेन परयोषिल्लाल--नादिकेन विप्रियेण हृद्वेधिमन्युकोटिमधिरूढां कान्तां दर्शं दर्शं करुणार्द्रमनास्तत्सहचरी तं सोपालम्भं निन्दति हे वीतकरुण क्रूर-हृदय पूर्वं स्वयमेव त्वयास्यै प्रेम विश्राणितं न त्वन्येन, किञ्च त्वयैवेयं दीर्घकालमुपलालनेनानुरागपूर्वं प्रीणिता किन्त्वहो दौर्भाग्य-योगात्त्वमेव न त्वपर एतस्या हृच्छित् कष्टतममभिनवमप्रियमद्या–कार्षीरिति वार्तानुश्रूयते, तदेतत् स्फुटं यदसह्य एव त्वदीयविप्रियजो मानातिशयो मानापनयनोपायषट्कपुरस्सरैः प्रसादनानुनयवचन–शतैरपि प्रशान्ति न गमिष्यति तेन कारणेन यावदात्मनो हृदय–शोकातिरेकः स्वयं चिरात् प्रशाम्यति तावदस्मत्सखी विशेषतो मुक्तकण्ठं सकरुणं चोच्चैरुच्चैः क्रन्दतु। पद्येऽत्र किलशब्दः सार्थको वस्तुतः शठस्वरूपेण नायकेन विहितस्य दुर्वारमानजयिष्णुदुराचारस्य सुविदितत्वेऽपि सोऽयं तादृशं दुराचारं न कुरुत इति वक्रोक्तिं किंचिद् व्यनक्तीवात्र चातिमात्रध्मापितमुखवाय्वतिशयस्फुटित–कंदुकन्यायेन निजकान्तनिष्पादितदुरितजमन्युप्रकर्षपरिपूर्णं नायिका-

हृदयं क्रन्दनेनोच्चैस्तरेण स्फोटं गमिष्यत् स्वयं प्रशमिष्यति तदैव सामादय उपायाः प्रयोक्तव्या इति निगूढाभिप्रायोऽपि नूनमुत्प्रेक्ष्यते पुनरत्र चेयं चिरं लालिता तथाप्यद्यास्या विप्रियं त्वया कृतमिति लालनविप्रिययोरननुरूपयोः संसर्गोपवर्णनाद् विषमसंज्ञकोऽलंकार आविष्कृतः शार्दूलविक्रीडितवृत्तेनेर्ष्यामानरूपिणा विप्रलम्भशृङ्गार-रसेन च् सार्धम् ।

**लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो**
**निराहाराः सख्यः सततरुदितोच्छूननयनाः ।**
**परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-**
**स्तवावस्था चेयं विसृज कठिने मानमधुना ॥५॥**

अयि निम्नोन्नतपाषाणवत्कर्कषहृदये पश्य, तव प्रियतमो जीवितेश्वरो बाह्यस्थले नम्रवदनस्त्वद्गतचिन्तानैरन्तर्यव्याकुलीकृतमनस्कत्वेन गृहीतमौनो निरर्थकं क्षितितलमालिखन् वरीवर्त्यते, तवेदृशं दशा--न्तरं दृष्ट्वा सहचर्योऽपि त्वदीयक्रोधाग्रहेण भृशं दुःखायमाना अवि-श्रान्तेन रोदनेन श्वयथुविकृतनेत्रा दूरीकृतभोजनव्यापारा बोभुवति तथा च पञ्जरस्थैर्वाचालैरपि लीलाशुकैः पूर्वाभ्यस्तं निखिलं सपरिहासवाग्व्यवहारं संयम्य वाचंयमतोरीचेक्रीयते, तेऽवस्थेयमि-त्थंभूता बोभवीत्यत एव सर्वजनदुःखकारणं मन्युं संप्रति संत्यजेति वचनकौशलेनाधिकतरमानसंधुक्षणक्षमकान्तापराधोल्लेखगन्धम पि परिहरन्ती विश्वासपात्रभूता सखी नायिकां मानं त्याजयितुं ब्रवीति। ननु मन्यामहे यदनेनोपदेशवचसा वस्तुतः कठोरापि कोपना साभ्यसूयिका स्वदयितस्यापराधमेकं क्षमेत, किं पुनर्द्राक्षाफलवन् मृदुलहृदया सततपतिवर्त्मगा । हे मानिनि त्वत्संबन्धिभिः सर्वैर्जनै--र्विवेकरहितपक्षिसहितैः सोपवासैर्बाष्पायमाणदृष्टिभिः समानदुःखै-

र्दुर्मनायमाणैः खलु शोकातिरेकोऽनुभूयत इति श्रुत्वापि का मानुषी स्वीयं प्राणवद्दयितं दयितं प्रति तदीयापराधजनितमानाभिनिवेशं निरन्तरं धारयेत् । अयं खलु प्रबन्धायमानो मानकृतविप्रलम्भशृङ्गाररसात्मकः श्लोक एवं भाषणसौष्ठवेन मानस्य निषिद्धत्वादाक्षेपालंकारेण विभूष्यते शिखरिणीवृत्तेन सह ।

**नार्यो मुग्धशठा हरन्ति रमणं तिष्ठन्ति नो वारिता–**

**स्तत्किं ताम्यसि किं च रोदिषि मुधा तासां प्रियं मा कृथाः।**

**कान्तः केलिरुचिर्युवा सहृदयस्तादृक्पतिः कातरे**

**किं नो बर्बरकर्कशैः प्रियशतैराक्रम्य विक्रीयते ।।६।।**

बह्वीभिर्युवतिभी रंरम्यमाणस्य प्रकटितकैतवस्य स्वदयितस्य दुराचारकदर्थितान्तःकरणामीर्ष्यामन्युग्रस्तां वीतधैर्यां वररोहां दर्शं दर्शं कोपं जहाहि अस्त्युपायो रमणस्य प्रत्युपार्जने, इति वल्लभप्रतिलाभयोग्यां प्रतिक्रियां शिक्षयन्ती परस्परविश्लेषितस्त्रीपुरुषसंयोजनवैदग्ध्यनिधिस्तत्सखी ब्रवीति यदङ्गनाः प्रकटितबाह्यमौग्ध्या अप्यान्तरशाठ्यपरिपूर्णा अप्सरोवद्रमणीयाकृतयोऽपि द्विजिह्वसरीसृपवत्कुटिलहृदयाः सत्यः प्रियतमं त्वत्सकाशादपहृत्य स्ववशे स्थापयन्ति, मा मा प्राणवल्लभं मेऽपहार्ष्ट युयं निस्त्रिंशा इति साक्रोशं निषिद्धा अपि नोपरमन्ति तस्मात् किमर्थं वृथा संतापज्वरेणात्मानं परिशोषयसि, किमर्थं वान्याचौरितस्वीयकान्ता सती व्यर्थकं क्रन्दसि, तव चिन्ताकुलतारोदनादिकमात्मसात्कृतत्वदीयरमणानां तस्करीणामभीप्सितं भवत्यत एव तासां प्रियहेतुकं मौर्ख्यं मा कार्षीः, अयि भीरु ! ते प्राणेश्वरस्तादृग्रूपः कमनीयवपुः सुरतलीलासक्तो मनोहरयौवनस्थश्च बोभवीति यो वैराग्यजनकान्यधमपरुषवचनानि परिहृत्य ताभ्यो मुग्धशठाभ्य आच्छिद्य मनस्तुष्टिकरैः चाटुशतैर्विक्र-

ययोग्यस्त्वद्वशंवदः क्रियते, एवं कर्तुं बर्बरकर्कशैरस्माकं वचोभिः किमपि प्रयोजनं नास्ति। दुष्टान्ययुवत्यपहृतदयितसमाकर्षणविषयेऽरण्यरुदितादिकं व्यर्थकचेष्टनं परिहाय वैदग्ध्यमेव प्रयोक्तव्यमित्यर्थान्तरं संसूचयति मानजविप्रलम्भशृङ्गाररसस्यन्दिनि पद्येऽस्मिन् प्रियशतदानेन रमणावर्जनरूपस्य विनिमयस्य द्योतितत्वात् परिवृत्तिर्नामालंकारः। शार्दूलविक्रीडितवृत्तम्।

**कोपात्कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं**
**नीत्वा वासनिकेतनं दयितया साय सखीनां पुरः।**
**भूयोऽप्येवमिति स्खलन्मृदुगिरा संसूच्य दुश्चेष्टितं**
**धन्या हन्यत एव निह्नुतिपरः प्रेयान् रुदत्या हसन् ॥७॥**

वनितान्तराभिगमनजनिताद् दुर्निवारमन्युप्रकर्षात् सुकुमारचञ्चलभुजवल्लरीरज्ज्वा निष्ठुरं निबध्य वसतिगृहं समानीय व्रीडापनयनयोग्यत्वात् सायंतनसमये प्रियसहचरीणां समक्षमेव पुनरपि त्वमित्थमपराधमकार्षीरिति कण्ठगतगद्गदगद्गदयन्त्या सव्यथयापि सुकुमारया वाचा तद्दुराचारं व्यज्य, नाहमपराद्ध इति स्वदुर्विनयप्रत्याख्यानतत्परः पुण्यराशिर्हासस्मेरवदनः प्रियतमः क्रन्दन्त्या प्रेष्ठया ताड्यत एवेति मधुररसप्रतिपादनरसिकेनास्मत्कविना प्रगल्भाधीराया ईर्ष्याक्रोधारुणितनयनोत्पलाया अभ्यसूयन्त्या नायिकाया व्यक्तीकृतान्याङ्गनासंगमरूपदुश्चेष्टितस्य निगृह्यमाणस्यापि सहासस्य धृष्टनायकस्य चोपहास्यचेष्टा रूपकसंज्ञकेनालंकारेण सुष्ठु वर्णिता। वृत्तं तु शार्दूलविक्रीडितम्। पुनरत्र कोमललोलबाहुलतिकापाशेनेति पदेन वरवर्णिन्यास्तातप्यमानकान्तविप्रयोगानलदग्धवपुष्कत्वेन बन्धनव्यपदेशाद् दयितकण्ठाश्लेषतृष्णाभिद्योत्यते हसन्निति

शब्देन च प्रकटितनिजदुर्विनीतत्वनिह्नवनसूचितकौटिल्यस्य रमणस्य धार्ष्ट्यं धन्यशब्देन च दयिताप्रतिपादितनिग्रहतर्जनताडनानामपि हृदयंगमसौभाग्यवत्ता किमुत सस्नेहचुम्बनालिङ्गनादीनामिति निगूढाभिप्रायोऽपि । अत्रानुमीयमानस्त्रीवत् प्रागभ्योच्छ्रायोपेताः प्रभविष्णवो महिलाः स्त्रीजितान् पुरुषान् न वशीकृत्य न कर्हिचित् सहेरन् ।

**यातः किं न मिलन्ति सुन्दरि पुनश्चिन्ता त्वया मत्कृते**
**नो कार्या नितरां कृशासि कथयत्येवं सबाष्पे मयि ।**
**लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा**
**दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः ॥८॥**

स्वकीयप्रियभार्यावात्सल्यातिशयसंत्यक्तविदेशप्रवासार्थप्रयाणाध्यवसायः केवलमेकजायाधीनत्वादनुकूलस्नेहार्द्रार्दचित्तवृत्तिः कश्चन प्रियवयस्यानुयुक्तप्रयाणत्यागकारण एवं वक्ति यदयि मत्तकाशिनि ! प्रोषिता देशान्तरप्रवासं समाप्य निजदेशं प्रत्यागता जनाः स्वस्वरमणीभिर्दन्दह्यमानविरहशोकाग्निशोषितदेहाभिः पुनर्दयितजनसमागमोत्कलिकाकीलितावशहृदयाभिः सुखेन किं न संगच्छन्ते ? अवश्यं संगच्छन्त एव, एवं मनसि दृढबद्धपुनःसंमेलनाशापाशया त्वयान्यथा मदर्थे कापि चिन्ता न कर्तव्या, भाविवियोगचिन्तया सुतरामधुनापि तनूकृततनुरसीत्येवं बाष्पपूर्णनेत्रे मयि सदयं ब्रुवाणे सति व्रीडामन्दीकृतकनीनिकाशालिना स्रवन्निगूढबाष्पबिन्दुना नेत्रेणायं निस्त्रिंश इत्यंभूतां प्रणयिनीं मां परित्यज्य दूरवर्ति देशान्तरं यियासतीति मनसि विधाय मामवलोक्याचिरेणावश्यंभाविमृत्युनिश्चयः शुष्कस्मितेन सह तयाव्यक्तीकृत इति । भाविविप्रलम्भशृङ्गाररसद्रवीकृतसहृदयरसिकमनसि श्लोकेऽस्मिन् पूर्वार्धे प्रश्नरूपे

नायकवचसि श्रूयमाणे सत्युत्तरार्धेन भाविमरणोत्साहपिशुनेङ्गित-रूपस्योत्तरस्य प्रतिपादनादुत्तरं नामालंकारस्तेन च कान्तप्रस्थान-निवारणोपायस्य संसूचितत्वादाक्षेपालंकारोऽपि, अथवात्र केनचित् सुहृदा प्रयाणः कस्माद्धेतोस्त्वया त्यक्त इति प्रस्तुतकार्ये पृष्टे प्रियाया भाविमरणोत्साहरूपिणोऽप्रस्तुतस्य कारणस्य वर्णनादप्रस्तुतप्रशंसा-लंकारोऽपि । वृत्तं तु पूर्ववद् भवति । उत्प्रेक्षामो यत् पूर्वपादद्वये कार्यादिप्रयोजनवशात् परदेशं जिगमिषोर्दयालुहृदयस्य वल्लभस्य भार्यास्नेहप्रकर्षः काव्यरसिकमनांसि तत्त्वत आवर्जयतितरां किं चोत्तरपादद्वये दरीदृश्यमानमिव स्वप्रस्थानानन्तरभाविदयितात्मव्या-पादनसंकल्पशंसि कृपास्पदायमानं निर्वचनचेष्टितं साक्षीकृत्यापि दयितां विहाय प्रयाणमार्गे प्रतिष्ठेत निर्दयोऽपि कः ?

**तद्वक्त्राभिमुखं मुखं विनमितं दृष्टिः कृता पादयो—**
**स्तस्यालापकुतूहलाकुलतरे श्रोत्रे निरुद्धे मया ।**
**पाणिभ्यां च तिरस्कृतः सपुलकः स्वेदोद्गमो गण्डयोः**
**सख्यः किं करवाणि यान्ति शतधा यत्कञ्चुके संधयः ॥९॥**

विहितपरयोषिल्लालनरूपदुराचारं स्ववासगृहे समायातं दयितं प्रत्येवमेवं त्वयाभ्यसूयाक्रोधव्यञ्जनार्थं विधातव्यमिति विदग्धप्रिय वयस्याभिर्दुर्विगाहपुष्पसायकरहस्यकोविदाभिः पूर्वमेवोपदिष्टापि स्वाभाविकमौग्ध्यविजितत्वात् तदीयप्रत्यागमनमहोत्सवजनितप्रह-र्षातिरेकाक्रान्तसवेपथुहृदयत्वाच्च तथाकर्तुमसमर्था भूत्वा तदानींतनीमात्मनोऽवस्थां ताभ्यो मुग्धा वर्णयति यत् प्राणेश्वरे समायाते सति तदानीं तदीयवदनसंमुखमेव लज्जयेव मया निजास्य-मवनमितं, संवर्धमानतद्दिदृक्षानिवारणाय स्वचरणयोरधस्ताद्

दृष्टिः प्रक्षिप्ता, तस्य संभाषणवचनश्रवणकौतूहलव्याकुलितौ स्वीयकर्णौ पिहितौ, तद्दर्शनपरमानन्देन कपोलयोः स्वच्छन्दं निस्यन्दमानो रोमाञ्चसहितः स्वेदप्रादुर्भावः कराभ्यां संछादितस्तथापि हे वयस्याः! शृणुध्वम्, प्रियतमसंदर्शनसमुत्थप्रहर्षसमुल्लासवेपमानरोमाञ्चितस्तनाभोगाध्मापितानि मदीयकञ्चुलिकायाः स्यूतस्थानानि शतधा विदलन्ति स्म, इत्थंभूतेऽत्राहं किं करवै? अत्र संभोगपर्यवसायिशृङ्गाररसमये पद्ये कृतापराधतया दुस्सहकोपास्पदीभूतस्यापि प्रियस्य सांनिध्ये प्रियाया मानाभासोऽपि बलीयसा तत्संगमजनितेन प्रीतिविकासेन भृशं दूरीक्रियमाणस्तिरस्क्रियते। ननु पतिप्राणानामधिगुणानामङ्गनानां जीविते स्वभर्तृसमागमादधिकतरश्रेयस्करं किं भवितुमर्हति? अत्रेष्टजनसंगमसिद्धिसमुत्थप्रहर्षसंसूचनात् प्रहर्षणालंकारो नायिकाया इङ्गिताकारोपलक्ष्यस्यानन्दातिशयरूपस्यार्थस्य सौक्ष्म्यात् सूक्ष्मो नामालंकारश्च पद्यभूषणत्वे दर्शितौ। वृत्तं तु पूर्ववत्।

**प्रहरविरतौ मध्ये वाह्नस्ततोऽपि परेण वा**

**किमुत सकले याति वाह्नि प्रिय त्वमिहैष्यसि।**

**इति दिनशतप्राप्यं देशं प्रियस्य यियासतो**

**हरति गमनं बालालापैः सबाष्पगलज्जलैः ॥१०॥**

हे दयितहृदयेश्वर! यामस्य पर्यवसाने पूर्वाह्णेऽत्र त्वं प्रत्यागमिष्यसि माध्यंदिनसमये वा ततोऽपि परेऽपराह्णे वाहोस्वित् समस्ते वासरे व्यतिक्रान्ते वा समायास्यसीति शतसंख्यकदिवसव्यत्ययगम्यं सुदूरवर्तिनं विदेशं प्रति प्रतिष्ठासतः स्ववल्लभस्य प्रयाणमतिमुग्धा तरुणी निपतदश्रुप्रवाहकलुषितैः सगद्गदस्वरैः कृपणैः

प्रलापैर्लुम्पतीतीह संचारिभावप्रकारान्तरभूतदैन्यातिरेकव्यञ्जके श्लोके दिनमेकमपि हे प्रेष्ठ त्वामन्तरेण हताशा जिजीविषाम्यहमिति काव्यसौक्ष्म्यनिगूढाभिप्रायो नायिकाया वितर्क्यतेऽत एव मा गा मां परिहायेत्यनुक्तेऽपि नायकस्य प्रवासबुद्धिः कथं न स्वयमेव संह्रियते यथैव निर्वीर्यत्वात्संत्यक्तसंग्रामोत्साहं पौरुषहीनं परिपन्थिनं दृष्ट्वा वीरवरस्य चन्द्रहासः कोषे पुनः प्रतिक्षिप्यते । अहो को दयालुवात्सल्यार्द्रार्द्रान्तःकरण एकपत्नीप्रेमानुकूलो विप्रकृष्टभूमण्डलस्थपरजनपदप्रयाणं निजनियोगवशादन्यस्माद्धेतोर्वा चिकीर्षुः सज्जीकृतप्रयाणसंभारोऽपि हा प्रिय कदागमिष्यसि वासरेऽस्मिन्नेव प्रत्यैष्यसीति स्वकीयचरणारविन्दद्वयसं बाष्पपूरं भविष्यत्कान्तविरहमन्युवशान्निपातयन्त्या अश्रुवर्षणदुर्दिनायमानवदनायास्तस्या सदैन्यं वारंवारं स्खलत्पदं प्रलापं श्रावं श्रावं प्रस्थातुं शक्नुयात् ?

अयि कान्त मा यासीरितीह वक्तुमिष्टेऽप्यशक्यवक्तव्यतया गमननिषेधस्यानुमितत्वादाक्षेपालंकारोऽथवा स्वप्रियप्रयाणसमये भाविविप्रयोगातुरायाः कान्तायास्तादवस्थ्योपवर्णनाज्जातिनामालंकारोऽपि विप्रलम्भरसोपबृंहणाय प्रयुक्तो हरिणीवृतेन साकम् ।

**धीरं वारिधरस्य वारि किरतः श्रुत्वा निशीथे ध्वनिं**
**दीर्घोच्छ्वासमुदश्रुणा विरहिणीं बालां चिरं ध्यायता ।**
**अध्वन्येन विमुक्तकण्ठमखिलां रात्रिं तथा क्रन्दितं**
**ग्रामीणैः पुनरध्वगस्य वसतिर्ग्रामे निषिद्धा यथा ।।११।।**

प्रवासप्रसङ्गाऽभुक्तकान्तासंभोगत्वेनासह्यपञ्चशरशरजर्जरितप्रोषितजनमनःसंक्षोभणशीले दयितासमागमोत्कलिकासहस्रैश्चिरविरहजमनोव्यथामरीमृद्यमानमपि विरहिनिकुरम्बं सहस्रकृत्व

पोपूर्यमाणे मेघागमसमये निर्विनोदत्वान्नूनं प्रहरत्रयसंमितायामपि प्रहरशतायमानायामिव संशय्यमानायां त्रियामायां शोश्रूयमाणेन मेघाडम्बरध्वनिनातिगम्भीरेणातिमात्रसंवर्धितोत्कण्ठातिरस्कृतसुषुप्सः कश्चिदध्वगः स्वप्रियादिदृक्षयोच्चैस्तरां रुरोदेति मनोज्ञशृङ्गाररसनिष्पादनैकतानोद्योगेन प्रवासिजनहृदयमर्मपारदृश्वना नः कविना चित्रवदुपवर्ण्यते, तमिस्रायां निशीथिन्यां वर्षाम्बु वर्षतो जलमयस्यापि प्रोषितचेतस्तापनस्य धाराधरस्य गम्भीरं स्तनितं श्रावं श्रावं दृष्टिगोचरातीते मयि प्रणयिनि सा मे कामिनी केन प्रकारेण संप्रति वियोगानलदन्दह्यमानमात्मानं विनोदयतीति सदीर्घोल्बणोच्छ्वसितं विप्रयुक्तामबलां तां दीर्घकालं सोत्कण्ठं चिन्तयतोद्गतबाष्पमुखेनाध्वनीनेन यथा प्रमुक्तकण्ठमुच्चैः कृत्स्नां निशामरोदि तथा विरहासहिष्णुप्रोषितचित्तवृत्तिविशेषाविज्ञैरन्यथाशङ्किभिर्जानपदैस्तत्रत्यैर्हन्त ग्रामे पथिकस्य पुनर्वास्तव्यं न्यषेधीति। वृत्तं शार्दूलविक्रीडितम् ।

**कृतो दूरादेव स्मितमधुरमभ्युद्गमविधिः**
**शिरस्याज्ञा न्यस्ता प्रतिवचनवत्यानतिमति ।**
**न दृष्टेः शैथिल्यं मिलन इति चेतो दहति मे**
**निगूढान्तःकोपा कठिनहृदये संवृतिरियम् ॥ १२ ॥**

येन पूर्वं प्रीतिस्निग्धं हृदयं मे स्वप्रेम्णाक्रायि यश्च मे निरुपमानुरागपात्रं भूत्वा जीवितसम आ संप्रत्यभूत् सोऽयं परयोषिदभिगमनपातकदूषितो निर्लज्जो निस्त्रिंशो भूत्वा गृहमागत इति प्रतिकूलप्रभञ्जनबलोत्थापितसमुद्रकल्लोलदोधूयमानं यानपात्रमिवाननुकूलनिजकान्तस्वैरविहितस्नेहभङ्गव्यसनझंझावातमामन्थ्यमानमपि क्रोधालुदावानलज्वालादन्दह्यमानं दाडिमफलमिवाभ्यसूयाकोपा-

ग्निशिखापरितातप्यमानमपि हृदयं कथमपि निगृह्य स्नेहचिह्न-राहित्यसूचकेन विनयातिशयाडम्बरेणाभ्युत्थानपूर्वकमुपचारक्रममनुतिष्ठन्तीं प्रगल्भां भार्यामवलोक्य भर्ता नैपुण्येन सोपालम्भमभिभाषते यदयि लोहखण्डवन्निष्ठुरचित्ते पराङ्गनासंगतिविदूषितमच्छरीरसंस्पर्शपरिहारायेव विप्रकर्षेऽभ्युत्थानप्रक्रमः स्मेररुचिरं यथा स्यात्तथा, न तु स्नेहपूर्वं, त्वया विहितोऽधुना किञ्च तथा करोमीति प्रतिवचनं ददानया त्वयैवमेवं कुर्विति मम निर्देशोऽपि तद्भारगौरवनम्रीकृते मस्तके, न तु हृदि, निक्षिप्तः पुनश्चावयो संमेलनप्रसङ्गे केवलं तव दृष्टिरेव दारुण्यं सूचयतीत्यन्तःकरणमध्यसंवृतमन्यु त्वदीयाकारगूहनमिदं मनो मे बहिःस्फुटितकोपानलादप्यधिकतरं दहतितराम्। अत्र श्लोकेऽभ्युद्गमादिकस्य विनीतोपचारविधेरन्यथानुपपत्तिहेतोः साध्यस्य कोपरूपस्य जिज्ञासितार्थस्योपवर्णनाद्धि प्रादुर्भवति शिखरिणीवृत्तेन सममनुमानाभिधोऽलंकारः।

**कथमपि सखि क्रीडाकोपाद्व्रजेति मयोदिते**
**कठिनहृदयः शय्यां त्यक्त्वा बलाद्गत एव सः।**
**इति सरभसं ध्वस्तप्रेम्णि व्यपेतधृणे स्पृहां**
**पुनरपि हतव्रीडं चेतः करोति करोमि किम्॥ १३॥**

क्षणभङ्गुरेणापि प्रणयकलहेन न तु वास्तविकविग्रहेण सूरतलीलाशयनादुत्थाय क्वापि निष्क्रम्य दृष्टिगोचरातीतं कामुकं विज्ञाय हृदयमर्मच्छिद् दुर्वहपश्चात्तापवेभिद्यमानस्वान्ता मुहूर्तमप्यविस्मरणीयरमणपुनर्दर्शनौत्सुक्यजरीगृह्यमाणसर्वात्मा दुस्सहनिर्वेददायिना कान्तापगमनेनानर्थकेन च किंकर्तव्यताविमूढचेताः काचित् कलहान्तरिता विश्रंभास्पदभूतां वयस्यां तत्प्रत्यानयने साहाय्यं प्रार्थ-

यमानेव सकरूणमाह हे सहचरि तदानीमाकस्मिकप्रणयविग्रहजकपट-क्रोधाद्धेतोस्त्वं गच्छेति मया कथंचित् प्रोक्ते सति वास्तविकेन रोषेणेयमित्थं वदतीति मत्वा दारुणचेतोवृत्तिरसौ मे कामी लीलातल्पं परित्यज्य बलात्कारेण, न जाने, कुत्रापि निष्क्रान्त इत्येवं हठाद्विनाशितानुरागाय कृपारहिताय तस्मै वीतलज्जं मे हतमनः साभिलाषं स्पृहयतेऽत्र किं मया कर्तव्यमिति।चाटुकारमपि प्राणनाथं रोषादपास्य या पश्चात्तापमवाप्नोति कलहान्तरिता तु सेति साहित्यदर्पणे दृश्यमानलक्षणान्विता नायिकात्मनो निर्विचारत्वेन हृदयवल्लभं लीलाकोपान्निरस्य खल्वनुशयातिरेकमनुभवन्ती तद्दर्शनौत्कण्ठ्येनाभिबोभूयमानास्त इति विषादोपेतस्वभावोक्त्यलंकारहरिणीसंज्ञकवृत्तशालिनानेन प्रणयकलहजविप्रलम्भरसस्वादुना श्लोकेन सुष्ठूपवर्ण्यते। वयमनुयुयुक्षामहे रे रे दुर्विदग्धे कथं नाम चिरसहवासपरिचयसुविज्ञाततदीयचित्तवृत्तिरपि तं स्वीयं रमणं मौर्ख्येन निराकृत्येदानीं दुर्मनायसे ?

**दंपत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वच–**
**स्तत्प्रातर्गुरुसंनिधौ निगदतः श्रुत्वैव तारं वधुः।**
**कर्णालम्बितपद्मरागशकलं विन्यस्य चञ्चूपुटे**
**व्रीडार्ता प्रकरोति दाडिमफलव्याजेन वाग्बन्धनम् ॥१४॥**

अहो कीदृक्षी सेयं लोकोत्तरा सर्वथैव सुधायमानश्रेष्ठकाव्यस्वादलेहलोलुपाखिलरसिकमनोह्लादिपद्यनिर्माणनैपुण्यमूलभूता शेमुषी कविवरेण्यस्य यया स्वप्रभाजाज्वल्यमानस्वरूपं सर्वलोकचमत्कारि मुक्तकरत्नमिदं निरमायि, अहो यौवनोन्मत्तवामलोचनाव्रीडाव्यभिचारिभावपरिपुष्टसंभोगशृङ्गारामृतरसनिष्यन्दित्वेन संभाव्य-

माना सुस्वादुता कवितासृष्टिकार्यप्रावीण्योपेतप्रभास्वरप्रतिभादेदी-प्यमानेनामरुणा यशस्विना निपुणं प्रतिपादितमनोहरशोभाशालि-त्वेन चातिरुचिरं रूपमस्य श्लोकस्य यं पाठं पाठं प्रीतिविकाशोत्फुल-नेत्रस्य कस्य चेतोऽतिस्वादुतयातिचारुतया च न द्रवीक्रियत इति मनसि विधाय वयमपि तद्रसचर्वणेनात्मानं प्रह्लादयिष्यामोऽधुना। प्रणयिस्त्रीपुंससुरतक्षणदायां ह्यस्तन्यां क्षणदायामन्योन्यचुम्बना-लिङ्गनलालनवस्त्रापनयनपुरस्सरे सस्नेहं रहसि संलपतोः स्मेरस्मर-विलासप्रमोदितयोर्जंपत्योर्वाच्यावाच्यचाटूक्तिकण्ठकूजितमणितादि-शब्दसमन्वितमनुरागमयं यद्वचनं गृहस्थलीलाशुकेन सावधानं कर्णाऽ-कारि तद्वचनं प्रातस्तरां श्वशुरश्वश्रूप्रमुखानां गुरूणां सान्निध्ये विस्पष्टमुच्चैरुच्चारयतस्तस्यैव शुकस्य त्रोटिसंपुटे स्वसुरतरहस्य-प्रकाशनेन खलु लज्जारुणितमुखी वधूर्दाडिमबीजव्यपदेशान्निजश्रव-णपाल्यवलम्बि कर्णावतंसभूतं पद्मरागखण्डं निधाय मौनव्रततत्पर-संन्यासिवत्त्वमपि हे वाचाल वाचंयमो भवेतीव तस्य पक्षिहतकस्य वाङ्मुद्रणं विधत्ते। शार्दूलविकीडितवृत्तमयं मुक्तकमिदं सुरतमर्म-गुप्तये गुरुजनातिसंधानस्य विहितत्वादवगम्यमानो युक्तिर्नामालं-कारोऽलंचरीकर्ति।

**अज्ञानेन पराङ्मुखीं परिभवादाश्लिष्य मां दुःखितां**
**किं लब्धं शठ दुर्नयेन नयता सौभाग्यमेतां दशाम्।**
**पश्यैतद्दयिताकुचव्यतिकरोन्मृष्टाङ्गरागारुणं**
**वक्षस्ते मलतैलपङ्कशबलैर्वेणीपदैरङ्कितम्॥१५॥**

पार्श्वमेति प्रियो यस्या अन्यासंभोगचिह्नितः सा खण्डितेति कथिता धीरैरीर्ष्याकषायितेति विश्वनाथेन प्रोक्तलक्षणान्विता रज-स्वला खण्डितयुवतिः स्वर्तुव्यपगमपर्यन्तं कियन्तमपि कालं संभोग-

लोलुपां नियन्तुमशक्यत्वात् कृतान्याङ्गनाभिगमनं रतिलम्पटं कामुकं न्यक्कृत्य सरोषमभिभाषते यदरेऽरे वीतलज्ज धूर्त योषिदन्तरेऽनुरक्तस्य तेऽपमानादत्यन्तनिर्विण्णामरुच्या खल्वसंमुखीमानुकूल्यविहीनां मामविवेकेन पृष्ठे समालिङ्ग्य, कथय, तिरस्कारार्हेण दुर्विनयेनान्यासंगमरूपदुराचारजमात्मनः सौभाग्यभावमीदृशीं गर्हणीयामवस्थां गमयता त्वया किं फलमवाप्तं, न किमपि, यतस्ते प्रियायास्तस्याः स्तनाभोगपरिमर्दनेनानुलिप्तो योऽङ्गरागस्तेन पूर्वमरुणीकृतं पश्चात् स्नानार्थमेव लिप्ताभ्यां मलीमसतैलकर्दमाभ्यां कर्बुरैर्मम प्रवेणीलक्ष्मभिर्लाञ्छितमात्मनो भुजान्तरालं पश्येति। इहान्तिमपादे मलतैलपङ्कशबलैर्वेणीपदैरित्यनेन स्वीयकामिनोऽपरासङ्गव्यसनरूपेण दुर्ललितत्वेन नूनं शतधा खण्डिताया ईर्ष्यामानकोटिमधिरूढायाः प्रगल्भनायिकायाः स्वर्तुसमये सद्यः पर्यवसिते सति स्नानार्थं सज्जितत्वं समर्थ्यते येनास्याः कामी सुरतोत्सवनिरतो वनितान्तरमुपभुक्तवान्। यदा स्त्रीविषये कैतवप्रयोगचतुरो दौष्ट्योल्लङ्घितविनयमर्यादोऽन्यया सह मान्मथकेलिं निर्विश्य तत्संभोगलक्ष्मलाञ्छितः स्वकीयरमणीसमीपमागत्य तामपि संभोक्तुं सचाटु यतेत तदा सा रोषातिरेकस्फुटितहृदया कथं न भवेत्? तादृश्याः खण्डिताया रोषावतारवत्क्रुद्धशार्दुलविक्रीडितवृत्तनियमितोऽभ्यसूयामन्युजनितविप्रलम्भरससंसिक्तोऽयं श्लोको विभूष्यते हेतूमता हेतुवर्णनमिति लक्षणोपेतेन हेत्वलंकारेण।

**एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद्दूरत-**
**स्ताम्बूलाहरणच्छलेन रभसाश्लेषोऽपि संविघ्नितः।**
**आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके**
**कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः॥ १६॥**

अनेकस्त्रीनिष्ठे योषिदन्तरलालनेन कृतापराधे वल्लभे गेहागते तद्भार्या धैर्येण धैर्येणान्तर्मन्युं निग्राहं निग्राहं प्रत्युत्थानादिरूपेण मृषाप्रश्रयेण स्वागतानर्हमपि तं स्वागतीकृत्य सहासनपरिग्रहसंभाषणसंश्लेषपुरस्सरमनुरागचेष्टितं विधित्सन्तं तं सविनयं परिहृत्य च मानं सिद्धार्थीकृतवतीति नो मान्मथमर्मपारदृश्वा कविवरो वर्णयति यद् गृहागतमपराधिनं भर्तारमप्रत्युद्गमनीयमप्याारात् प्रत्युद्गत्य तच्छरीरसंपर्कपरिजिहीर्षयैव समाने पीठे सहोपवेशनं तया मानिन्या निपुणेन निवारितं ताम्बूलपात्रमानयामीति व्याजेन तस्य सबलात्कारालिङ्गनोद्यमोऽपि कुशलबुद्ध्या तया विध्वंसितः सामीप्यवर्तिनं परिवारमिदमिदं कुरुतेति विविधेषु कार्येषु चतुरं नियुञ्जानया तया संलापावकाशोऽपि तस्मै न दत्त इत्येवंप्रकारेण स्वीयं रमणं लक्षीकृत्य कपटसत्क्रियाद्वारा निपुणया तया मनसि निगृहीतः क्रोधः सफलीकृत इति । दुर्ललितं भर्तारमुद्दिश्य निन्दानिर्भर्त्सनादिकबाह्यकोपव्यक्तिवर्जमङ्गीकृतमृषादरायाः स्थिरधैर्यनिधेर्जायायास्तादृग्विधावसरयोग्यं चातुर्यं शार्दूलविक्रीडितवृत्तयुजि रमणापराधजनितविप्रलम्भरसमये मुक्तकपद्येऽस्मिनाकारगोपनगर्भयुक्तिसंज्ञकालंकारादप्यधिकतरमलंकारविशेषायत इति मे मतिः ।

**दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरा–**
**देकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः ।**
**ईषद्वक्रितकंधरः सपुलकः प्रेमोल्लसन्मानसा–**
**मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ।। १७ ।।**

एकत्र समानासने समुपविष्टं समानानुरागपात्रीभूतं कामिनीयुगलं दृष्टिगोचरे कृत्वा पृष्ठतस्तूष्णीं सप्रयत्नमुपसृत्य दुर्वारम-

दनखेलोत्सुकतयैकतरस्या दृशौ हस्ताभ्यां परिच्छाद्य कृतक्रीडाभिनिवेशव्यपदेशोऽपि वस्तुतस्तस्या नयनविषयात् तिरस्कृतान्याचुम्बनविधिस्तिर्यग्दरनम्रीकृतशिरोधरः सन् कंदर्पज्वरदीप्यमानमनस्कां हस्तपिहितनयना मन्दधीरियमतिसंधीयतेऽधुनेतीव मनसि संजायमानमन्दहासोत्फुल्लगण्डभित्तिमन्यां,सवेपथुरोमाञ्चितवपुर्दक्षिणो धूर्तः परिचुम्बतीति मनसिजमनोराज्यविजृंभणप्रख्ये चमत्कारिकाव्यलोलुभानां चेतांसि विचित्रचित्रवच्चित्रीयमाणे कविवाक्ये प्रियतम इत्यनेन शब्देन समकालमेव कामुकस्य युवतिद्वयेऽनुरक्तत्वमेकासनसंस्थित इत्यपरेण च भतुः समानप्रेमास्पदभूतयोर्मध्ये पारस्परिकाभ्यसूयाविद्वेषादिदौर्मनस्यराहित्यं साधारणभर्तृकाभावेन परस्परस्योपरि सौहार्दशंसि चानुकूल्यं संसूच्यन्ते । अत्र पूर्ववच्छार्दूलविक्रीडितवृतोपेते श्लोक एकस्या नयनपिधानरूपं कार्यं प्रकुर्वता नायकेनापराचुम्बनरूपं कार्यान्तरमपि युगपत्कृतमिति विशेषालंकारः ।

यद्यपि मुक्तकमिदं कंदर्पदर्पाध्मातसंभोगशृङ्गाररसोक्षित्वाद् यथातथं रुचिरं नितम्बिनीद्वितयेन रममाणस्य कामुकस्य बालिश्यनर्मगर्भितत्वान्नूनं रसिकमनोपहारि वा भवेत्तथापीह संभाव्यमानमेकलस्य पुरुषस्यानेकपत्नीकत्वं न केवलं सन्मार्गसमाश्रितलोकव्यवहारपद्धतिव्यपेतमपि तु समाजवादमूलकस्त्रीपुंधर्मविरुद्धमिति खल्वाधुनिकलोकेऽप्राप्तकालं भवति, येनैतन्मुक्तकं केवलं शृङ्गारिकवेरमरुकस्य मिथ्यामनोराज्यविजृंभितमेव भवतु ।

**चरणपतनप्रत्याख्यानप्रसादपराङमुखे**

**निभृतकितवाचारेत्युक्ते रुषा परुषीकृते ।**

**व्रजति रमणे निःश्वस्योच्चैः स्तनार्पितहस्तया**

**नयनसलिलच्छन्ना दृष्टिः सखीषु निपातिता ॥ १८ ॥**

मदनकलहोत्थमानप्रशमनाय सानुनयं चरणयोर्निपतितं दाक्षिण्यानुकूल्यसमुपेतं निजवल्लभं प्रसादनप्रत्यादेशात् कर्कशवचनोच्चारणाच्च विरक्ति गतमपास्य ततोऽनुशयाभिभूतहृदयाया दैन्यातिरेकमुपवर्णयन् नानाविधमदनावस्थाकोविदोऽतिरुचिरशृङ्गाररसैकतानकविसार्वभौमोऽमरुरित्थं यथावस्तु यावन्निगदति यद् यदा पादप्रणामस्य तस्या निराकृत्या सान्त्वने निराशो निगूढकैतवसमाचारैकरसो रे रे धूर्तहतकेति सोल्लुण्ठं सोपालम्भं तया प्रोक्तेन वचसा परमार्थतोऽपमानितत्वात्क्रुधा कर्कशीकृतान्तःकरणस्तस्यां चिरानुरक्तोऽपि विरज्यमानः प्राणदयितो गृहाद्बहिर्निरयासीत् तदा पश्चात्तापतातप्यमाना सकरुणं दीर्घनिःश्वासं कृत्वा विरहातुरतया वेपमानकुचकुम्भनिहितपाणिः शोकविकलाश्रुबिन्दुक्लिन्नां दृष्टिमित्थंभूतेऽत्र को योग्यः प्रतिविधिः स्यादितीव प्रियवयस्यासु न्यपीपतत् । हे किंकर्तव्यताविमूढे मानिनि ! अकारणप्रणयकलहकोपितामीर्ष्यालुं यथाशक्ति त्वां चरणनिपतनेनाप्यनुनिनीषुं निरुपमानुरागातिशयशालिनं कामिनं निन्द्यरोषव्याकुलमनसा सुदूरीकृतकोमलस्त्रीस्वभावया पारुष्यग्रस्तचित्तवृत्त्या त्वया निर्घृणं निरस्याधुनानुशयानया मर्मच्छिद् विरहोऽनुभूयतेतमामित्येतदहो अकाण्डवज्रनिपतनमिवोपलक्ष्यते तथापि किमपि प्रतिविधेयमत्र न स्यात्। नायिकाया स्वाभाविकव्यापारवर्णनसमुत्थेन जातिसंज्ञकेनाऽलंकारेणाथवा विरहरूपानिष्टार्थजन्मसूचकेन विषादनालंकारेणायं हरिणीवृत्तशोभमानोऽपि कान्तनिराकृतिजविप्रलम्भशोकसमुद्रनिमग्नः श्लोको विभूष्यते ।

**काञ्च्या गाढतरावनद्धवसनप्रान्ता किमर्थं पुन-**
**र्मुग्धाक्षी स्वपितीति तत्परिजनं स्वैरं प्रिये पृच्छति ।**

**मातः स्वप्तुमपीह वारयति मामित्याहितक्रोधया**

**पर्यस्य स्वपनच्छलेन शयने दत्तोऽवकाशस्तया ॥१९॥**

प्रदोषवेलायां गृहागतस्य प्रणयिनो भर्तुर्भावाकूतावबुभुत्सया नूनं मिथ्या निद्राणा भार्या कथमियं वरारोहा मत्तकाशिनीत्थं निद्रातीति परिवारमनुयुञ्जानस्य तस्यैव निगदितमाकर्ण्य मदनमदज्वरव्याकुलितसर्वाङ्गालसा मधुरिमातिशयमीनकेतनकेलिलिप्सया परिवर्तितपार्श्वभागा तल्पे तस्यावकाशमदादिति परस्परानुरक्तमिथुनसूक्ष्मेङ्गिताकारज्ञाननिष्णातेन सलीलमुक्तकशतमयमकरध्वजबिरुदावलीनन्दितसर्वलोकेनास्मदीयेन कविपुंगवेन सरसं व्याह्रियते यन्मेखलागुणेन सुदृढतरमाप्रपदीनाधोवस्त्राञ्चलं निबध्य वामलोचना वरवर्णिनी किमर्थं पुनर्निद्रातीति तदीयानुजीविनं परिच्छदं शनैः शनैरनुयुञ्जाने प्रियतमे सति हेऽम्ब मे निद्रासुखमप्यत्र सोऽयं विध्वंसयत इति स्त्रीजनप्राकृतिकमृषाकाशभाषितद्वारेण साकूतप्रकाशितकोपयार्धनिमीलितालसनेत्रया तया कपटनिद्राव्याजेन मन्दमन्दं परिवृत्य विलासशयनीयके तस्यावकाशोऽदायीति। इह गाढतरावनद्धवसनप्रान्तशब्देन काञ्चीगुणोच्छ्वसनपुरस्सरवस्त्रापनयनरूपमान्मथलीलायितप्रस्तावनापूर्वकसरसपीवरनितम्बबिम्बसंस्पर्शतृष्णा संभोगाभिलाषुकस्य कान्तस्य हृदि संजायेत, किमर्थं स्वपितीत्यनेन रम्भोरूकर्तृकप्रियभावजिज्ञासा द्योत्यते, आहितक्रोधयेति पदेनार्थपरिणामात् प्रीतिविकासः कान्ताया व्यज्यते, अवकाशो दत्त इत्यनेन च तस्या मनोऽभिराममैथुनपीयूषरससिस्वदिषा निभृतं संसूच्यते । संभोगशृङ्गाररसतन्मयेऽत्र शार्दूलविक्रीडितवृत्तयुजि पद्ये कुतोऽपि लक्षित. सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते, धर्मेण केनचिद्यत्र तत्सूक्ष्मं परिचक्षत इति मम्मटकृतलक्षणोपेतः सूक्ष्मालंकारः शरीर-

परिवर्तनरूपेणङ्गितेन शयनपार्श्वेऽवकाशदानात्कामिन्याः सुरताभिलाषरूपं सूक्ष्मार्थं व्यक्तीकुर्वाण उत्कृष्टभूषणायते ।

**एकस्मिञ्शयने विपक्षरमणीनामग्रहे मुग्धया**
**सद्यः कोपपराङ्मुखं ग्लपितया चाटूनि कुर्वन्नपि ।**
**आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणा–**
**न्मा भून्म्लान इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥२०॥**

कस्यांचिन्निशीथिन्यामेकत्रशयनीयके भार्यया सह शयानेन नूनं स्वप्नायमानेन भर्त्रा वाक्स्खलनात् सपत्नीयमानायाः प्रतिनायिकाया हितेतरमनभीष्टं नामधेयमुच्चारितं सैंहिकेयाग्रहेण राकेव तन्नामग्रहेण सहसा विच्छायतां गता सा भार्या सासूया रोषज्वरेण विमुखीभूय प्रसादनानुनयतत्पराणि लालनवचांसि बहून्यभीक्ष्णं प्रयुञ्जानमपि दुर्वारेर्ष्याग्रहग्रस्तत्वात् क्रोधवेगादवहेलिष्ट किञ्च तदनन्तरमेव सामविधौ निराशत्वाद्दयिते गृहीतमूकभावे सति मद्धेतुकचिन्ताव्याधिनायं मे वल्लभो ग्लानसदृशोऽप्यस्वस्थसंकाशोऽपि मा भूदिति प्रभविष्णुप्रेमबलविजिताबलकोपकण्टका झटिति शिरोधरां विवर्त्य तं पुनरद्राक्षीदित्यन्योन्यासक्तप्रणयिमिथुनेर्ष्यामानरूपोपदंशमिश्रितशृङ्गारपीयूषरसप्रोक्षणप्रीणितसहृदयजनमन–सामूल्यमुक्तकशतीमयकाव्यमुक्तावलीगुम्फनासमुपार्जितशाश्वतिक–श्रवस्येन शार्दूलविक्रीडितवृत्तप्रियेण कविवरेण्येनामरुणातिरुचिर-चित्रवदुपवर्णितेऽत्रेर्ष्यामानात्मकविप्रलंभानन्तरसंजातसंभोगशृङ्गा–रस्याङ्गभूतया स्मरणकोपचिन्तौत्सुक्यभावनां शबलतया निर्मितेन भावशबलालंकारेण शोशुभ्यमाने मुक्तके विपक्षरमणीनामग्रहशब्देन नायकस्य प्रतिनायिकास्मरणं कोपपराङ्मुखं ग्लपितयेत्यनेन नायि

कायाः कोपाविर्भावस्तूष्णींस्थितपदेन चिन्ता पश्चिमपादेन चौत्सुक्यं पृथक्पृथगभिव्यज्यन्ते पुनश्चात्र कोपपराङ्मुखं चामन्दवलितग्रीवं चेति क्रियाविशेषणद्वयं वर्तते।

**एकस्मिञ्शयने पराङ्मुखतया वीतोत्तरं ताम्यतो–**
**रन्योन्यं हृदयस्थितेऽप्यनुनये संरक्षतोर्गौरवम्।**
**दंपत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो–**
**र्भग्नो मानकलिः सहासरभसं व्यावृत्तकण्ठग्रहः ॥२१॥**

सैव क्षणदा परस्परानुरागिनोर्जायापत्योः क्षणभङ्गुरप्रणयकलहभङ्गेन यथार्थतो हृदयंगमसंभोगक्षणदा समजनि यस्यामादौ सर्वंकषस्वपराक्रमोत्सिक्तप्रणयिस्त्रीपुंसकलहप्रियकंदर्पदर्पजनितो निष्कारणोऽपि हृदयंतपः प्रणयकलिस्तावपीपिडदित्येवमीर्ष्यामानजकलहात्मकविप्रलम्भदुःखदीर्घीक्रियमाणत्वात् त्रियाममयीमपि यामशतयमानां क्षणदामप्यक्षणदां निशां प्रस्तुतजंपत्योः कृते सर्वाङ्गपूणेन मनोमोहिना संभोगरसेन यथाशीघ्रं यापयितुमिवास्मत्कविर्वर्णयति यत् समानशय्यायां शयितयोरपि कोपाद् वैमुख्येन व्यपेतप्रतिवचनं यथा तथा दुर्मनायमानयोः सान्त्वनेच्छायामितरेतरस्य मनसि विद्यमानायामपि लघिमपरिजिहीर्षया गरिमाणमाश्रयतोस्तदनन्तरमीषदीषदपाङ्गव्यावर्तनेन शनैः शनैः संयुज्यमानदृशोर्जायापत्योः प्रणयकलहः सस्मितं सत्वरं परिवृत्तयोः परस्परकण्ठयोः समाश्लेषेण विध्वस्त इति। इह जात्यलंकारशार्दूलविक्रीडितवृत्तशालिनि मानजविप्रलम्भानुगामिसंभोगशृंगारामृतरसमधुरितेऽस्मिन् पद्ये ननु क्षणिकप्रणयकलिः प्रणयमूलकत्वेन प्रणयेनैव प्रशान्ति सपदि नीयते, नान्येनेति न्यायेन पूर्वार्धेऽनुमीयमानं कलहहेतुकदौर्मनस्यमुत्तरार्धे प्रादुर्भूतेन प्रीतिप्रकर्षेणाभिभूयत इति प्रशस्यसदाचाराश्रितस्त्रीपुं

धर्मानुकूल: सर्वत्रानुसृतलोकचारित्रपथाविरुद्धः प्रणय एव प्रमाणम् । किं बहुना, सर्वतः सर्वंदमविजिगीषुमदनमदज्वरोद्दीपककण्ठाश्लेषेण नानारूपं दुःखकदम्बकं चिरंतनमपि दुस्सहमपि विस्मर्यते किं पुनरकिंचित्करप्रणयमानजं दुःखम् ?

**पश्यामो मयि किं प्रपद्यत इति स्थैर्यं मयालम्बितं**
**किं मां नालपतीत्ययं खलु शठः कोपस्तयाप्याश्रितः ।**
**इत्यन्योन्यविलक्षदृष्टिचतुरे तस्मिन्नवस्थान्तरे**
**सव्याजं हसितं मया धृतिहरो बाष्पस्तु मुक्तस्तया ॥२२॥**

यादृच्छिकप्रणयकलहसमुत्थेन कोमलहृदयशिरीषकुसुमशोषिणा वैमनस्येन सर्वथा व्याप्तं स्वयमनुभूतं दुर्वाच्यवैलक्ष्यपरिपूर्णं विचित्रावस्थान्तरं यथातथं वर्णयन् मधुरमधुरिमसहचरयौवनोद्भेदस्मेरवदनः केनचिद् विश्वासपात्रीभूतेन सुहृदा जिज्ञासया ननु पर्यनुयुक्तः कोऽपि रमणः सरसं ब्रवीति यदकुतःसंभवस्याप्यकस्मात् संजातस्य निष्कारणस्यापि वैक्लव्यदायिन आवयोस्तरुणदंपत्योः प्रणयकलहस्याद्भुतसंकाशे प्रसङ्गेऽधुनैषा मे भार्या मद्विषये किं नु समाचरितुं प्रक्रमिष्यते पश्येयमिति परीचिक्षिषया चिरसहिष्णु धैर्यं मया प्रतिपन्नम्, किं न खलु निष्ठुरहृदयोऽयं धूर्तो मां नाभिभाषत इति गाढोत्कलिकाविमनीकृतया तया रोष उरसि कृतस्ततः कियत्यपि चित्तंतपे काले व्यतीते सति परस्परवैलक्ष्यापाङ्गवीक्षणमनोऽभिरामे तादृग्भूते विकृतदशाविशेषे किंचिदकिंचित्करं मुधा व्यपदिश्य मया वैलक्ष्यस्मितं कृतं तत्क्षणं च तेन स्मितेन विद्रावितक्रोधालुहृदयया तया त्वीर्षामानजनितस्थैर्यचुरं वैमनस्यनुदं नेत्राम्बु निपातितमिति । हन्त निसर्गविशुद्धमुक्ताफलवत्सु-

षममेतन्मुक्तकं भावसौक्ष्मसमन्वितप्रणयमानाभिनयकुशलस्त्रीपुंसप्रयुक्तनाट्यप्रेक्षणकवत्प्रेक्षणीय मनोमथनकोपात् किंचिन्निर्वेदकरमपि पुनर्मदनोल्लासप्रादुर्भावात् संतुष्टिप्रदं सव्याजं हसितं मया धृतिहरो मुक्तस्तु बाष्पस्तयेत्यनेन मञ्जुलेन पादेन व्यक्तीकृतायाः प्रणयकलहजविप्रलम्भसमनन्तराविस्कृतसंभोगशृङ्गारस्याङ्गभूतायाः कोपशान्तेर्निमित्ताज्जनितेन समाहितालंकारेण सुमण्डितं पुनः शार्दूलविक्रीडितशोभि कस्य रसार्द्रं चित्तं न समाचरीकृष्यते ?

**परिम्लाने माने मुखशशिनि तस्याः करधृते**

**मयि क्षीणोपाये प्रणिपतनमात्रैकशरणे ।**

**तया पक्ष्मप्रान्तध्वजपुटनिरुद्धेन सहसा**

**प्रसादो बाष्पेण स्तनतटविशीर्णेन कथितः ॥२३॥**

प्रयत्नतो नानाविधोपायद्वारेण सुचिरमनुनेनीयमानाया अपि प्रसन्नतामभजमानाया अमर्षव्यभिचारिभावकलुषीकृतान्तरात्मन आत्मकीयदयिताया मदनकोपेन विलक्षचेतोविकारसंभवमवस्थान्तरमनुभूतवान् कश्चिद् युवा परस्पररहस्यभजनसंभाविताय विश्वसनीयाय सुहृदे यथावस्तूपांशु कथयति यन्मदपराधसंभवे मनोमथनशीले तस्या मे प्राणदयिताया अमर्षे स्वयं परिशुष्यमाणकुसुमवद् ग्लास्नौ प्रशान्तप्राये, तमिस्रे गगने समुदितकुमुदबान्धववन्निरूपितत्वादतिचारुणि मदीये चेतसि सदा विकसितत्वादतिमनोज्ञे वदने चिन्ताकुलया तया सोच्छ्वसितं हस्तनिहिते सति तथा प्रियचाटूक्तिसान्त्वनादीनां सर्वेषामुपायानां परिक्षयेण ध्रुवमुपायान्तरविरहिते मयि गत्यन्तराभावात्तच्चरणयोः केवलं प्रणिपातमात्रैकाश्रये सति पक्ष्मलानां पक्ष्मणामक्षिलोम्नां प्रान्ता एव ध्वजास्तेषां

संपुटेऽवरुद्धेनापि तत्रावरोधयितुमशक्यत्वेन प्रकामतः प्रवहताचिरेण पीवरमञ्जुलवक्षोरुहाभोगे सर्वत्र जर्जरितेन मूकेनापि तस्या नेत्राम्बुना मयि प्रसन्नता सहर्षमह्नाय समुद्घोषितेति। ननु क्रोध-कालुष्येऽपि हृदयमाधुर्यं धारयन्त्या मानिन्या बाष्पमोचनसमकालमेव प्रशान्तिं प्राप्तस्य प्रणयमानस्योपवर्णनोत्थो मुखशशिशब्दनिरूपित-रूपकालंकृतिसहितो मानसमनन्तरजसंभोगरसाङ्गभूतः समाहिता-लंकारो मान्मथरससारनिष्यन्दिपीनोन्नतस्तनजघनविशिष्टशिख-रिणीवद्रुचिरशिखरिणीवृत्तोपेतमेनं श्लोकं मण्डयति।

**तस्याः सान्द्रविलेपनस्तनयुगप्रश्लेषमुद्राङ्कितं**

**किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते।**

**इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया**

**साश्लिष्टा रभसेन तत्सुखवशात्तस्याश्च तद्विस्मृतम् ॥२४॥**

ह्यस्तन्यां विभावर्यां कुत्रचिद्बहिर्गत्वा मदनातुरया प्रतिपक्ष-कामिन्या सार्धं मनोहरकण्ठाश्लेषचुम्बनालिङ्गनपुरस्सरमन्मथलीला-महामहं यथातृप्ति निर्विश्य प्रभाते गृहागते त्वयि किंरूपो वृत्तातः समजनीति साभिप्रायं सहायेन केनचित् परिपृष्टोऽतिधृष्टःप्रहर्षो-त्फुल्लनयनः समुपजोषमनुभूतकांताद्वयसमुपभोगस्मरणसंतुष्टिस्मेर-वदनो जिह्वाग्रेणौष्ठपुटं लीढ्वा साटोपमभिभाषते प्रतिपक्षरमण्याः सुरतमृदितायास्तस्याश्चन्दनकुंकुमादिमयेन निबिडतराङ्गरागे-णानुलिप्तस्य कुचकुम्भयुगलस्य परिरम्भणचिह्नेन प्रतिलाञ्छितं भुजान्तरालस्थलं मच्चरणप्रणिपातरूपतिरस्क्रियाव्यपदेशेन त्वमपह्नुष इति मदीयभार्यया सासुयं निगदिते कुत्र तद् वर्तत इति परिहासपूर्वं व्याहृत्य सपदि तदङ्गरागलाञ्छनमेव परिमार्जितुं, न

तु तां परिरब्धुं, मया सावेगं सा समालिङ्गिता किञ्च मदालिङ्गनपरमानन्दवशंवदत्वादितरस्या अङ्गरागचिह्नमपि तया विस्मृतमिति। वनितान्तराभिगमनरूपस्वमर्मगोपनार्थमेव संभोगचिह्नाङ्कितं वक्षः पादप्रमाणमच्छलेन कामुको निगूढवानिति युक्त्यलंकारोऽथवा सुरतचिह्नसंसूचितस्य गूढवृत्तान्तस्य प्रणिपातापदेशात् कान्तासमालिङ्गनेच्छायास्तच्चिह्नसंप्रमार्जनव्याजाच्च साकूतपिधानं विहितमिति पिहितालंकारो नः कवेरभिप्रेतशार्दूलविक्रीडितवृत्तयुजीर्ष्यामाननर्मप्रीतिप्रकर्षगर्भे मानानन्तरजनितसंभोगरसस्वादुनि पद्येऽत्र सुतरामेव देदीप्यते, किञ्चात्र योषिदन्तरसंगमदूषितेऽपि निकृष्टाचारेऽपि कामिनि दृढबद्धेनानुरागेण समूलघातं प्रणयमानस्य विध्वंसितत्वाद् वयं सखेदमिव ब्रूमहेऽयि युवतयः ! सर्वा यूयमबला इत्युच्यध्वे खल्वित्यत्र किमाश्चर्यम् ?

**त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं**
**लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि ।**
**शय्योपान्तनिविष्टसस्मितवधूनेत्रोत्सवानन्दितो**
**निर्यातः शनकैरलीकवचनोपन्यासमालीजनः ॥ २५ ॥**

कदाचिच्चित्तापहारिमदनमदद्रवीभूतसर्वावयवस्य गाढप्रेमबन्धसंदानितचेतोवृत्तेः स्वकीयमुग्धवामलोचनामनिर्वचनीयशारीरकसुषमाशोशुभ्यमानां सस्नेहं दर्शं दर्शमकुतःसंभवमदातिरेकदर्पितपुष्पधन्वसहेलप्रक्षिप्तपौष्पबाणताताड्यमानस्य कान्तस्य कान्तासंबुभुक्षालक्षणं वाच्यातिरिक्तव्यङ्ग्यार्थं रुचिरध्वनिहेतुकमर्थव्यञ्जनाशक्त्यात्रारोप्य सुरसमधुरिमवाहध्वनिमयकाव्यरत्ननिर्माणचतुरेणास्मदीयेन कविना सरसमभिधीयतेऽयि चारुलोचने कञ्चुलिकापराह्वस्त-

नांशुकमन्तरेणापि पीवरोच्छ्रितवक्षोरुहकुम्भयुगलकस्य चक्षुस्त्वगिन्द्रियपरमसुखदायित्वान्मनोविमोहिनीं प्रकृतिप्रभावतीं स्तनशोभां त्वं जुषस इत्येवंप्रकारेण साभिलाषं व्याहरति प्रेष्ठे प्राणेश्वरे स्तनांशुकं विमोचयितुं तद्बन्धनग्रन्थिं संस्पृशति सति युष्मत्समक्षमेवायं मेऽनुरक्तभर्तेदृशं चापल्यं समाचिचरिषतीति व्रीडार्तायाः शयनप्रान्तदेशोपविष्टाया विह्वलस्मितविकस्वरवदनारविन्दाया वध्वा भाविसुरतोत्सवचिन्तनमना निमीलितनयनप्रसादप्रमुदितस्तदीयसखीजनस्तौ दंपती परस्पररिरंसां सफलीकारयितुमेव कार्यान्तरव्यपदेशेन वितथमुक्त्वा मन्थरगतिस्ततः स्थानाद्बहिर्निरयासीदिती । 'देहि मत्कन्दुकं राधे परिधाननिगूहितम्, इति विस्रंसवन्नीवीं तस्याः कृष्णो मुदेऽस्तु नः' इतिवदत्र पूर्वपादद्वयसंसूचितेन कञ्चुलिकापहरणव्याजेनाभिलषितसंभोगार्थसाधनम्, 'यामि चूतलतां द्रष्टुं युवाभ्यामास्यतामिह' इतिवदुत्तरपादद्वये व्यक्तीकृतेनालीकवचनच्छलेन निर्यान्तीभिः सखीभिस्तरुणजंपत्योरभिप्रेतरतिसर्वस्वसंपादनं कृतमिति निरूपितः पर्यायोक्त्याह्वोऽलंकारः प्रकृष्टभूषायते पुनरपि चात्र पूर्ववच्छार्दूलविक्रीडितवृत्तशालिनि काव्यग्रन्थशतायमाने मुक्तकरत्ने मुग्धाक्षीति संबोधनशब्दो वरारोहाविलोभनार्थं प्रयुक्तो, विनैव कञ्चुलिकया धत्से मनोहारिणीं लक्ष्मीमित्यनेनातिरुचिरमन्मथशेवधिरूपस्य पीनोन्नतकुचयुगलस्य नैसर्गिकीं श्रियं तिरस्कुर्वाणया तया कञ्चुलिकया किं प्रयोजनमिति भङ्गीभणितं व्यङ्ग्यम्, तद्वीटिकासंस्पृशीति पदेन प्रादुर्भवन्मन्मथज्वरतरलस्य सुरतोत्सुकस्य कामिनो रिरंसा सूचिता, शनकैरलीकवचनोपन्यासमिति क्रियाविशेषणयुग्मं यथारुचि संभोगसुखमुपबुभुक्षोस्तस्यस्तनवस्त्रापहरणचापलेन भृशं लज्जिताया नवोढाया व्रीडालघूकरणार्थं सरहस्यानङ्गक्रीडावकाशदानार्थमेव चोपन्यस्तमिति व्यङ्ग्यार्थसौक्ष्मप्रीणितमनस्का वयमनुमिमीमहे ।

भ्रूभङ्गे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते
रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते ।
कार्कश्यं गमितेऽपि चेतसि तनू रोमाञ्चमालम्बते
दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिञ्जने ॥ २६ ॥

निजहृदयस्थस्यापि कामुकस्यापराङ्गनालालनादिशाठ्यदोषेण खण्डितयात एव दुर्निवारेर्ष्यामर्षसंतापकषायितलोचनया त्वया दुर्ललितं तं प्रति सभ्रूभङ्गमानानुभावप्रकाशनार्थमेवमेवं क्रियतामिति प्रौढसखीभिरध्यापितरोषानुभावप्रकाराप्यतिमुग्धतया वा तस्मिन् कामयितरि सुतरामनुरक्तत्वेन वा तथा कर्तुमसमर्था भूत्वा मुग्धयुवतिस्ता अभिभाषते हे प्रियसख्यः ! तं मे रमणं दृष्टिगोचरे कृत्वा प्रणयक्रोधप्रकटनाय कथमपि भ्रूकुटिरचनायां विहितायामपि स्नेहव्यक्तिपेशला दृष्टिर्ममौत्सुक्याधिक्येन सोत्सुकं तं जनं निरीक्षते तवातिमर्यादिनापराधेन क्रुद्धाहं न बिभाषिष इतीव वाचंयमतायां कृच्छ्रादङ्गीकृतायामपि तद्दर्शनानन्देनेदं हतमुखं विकसितस्मिति संजायते, कथमप्यभिनयनद्वारा मनसि काठिन्यं प्रापिते न तु स्वयं प्राप्ते शरीरं यथातृप्ति तदवलोकनप्रीतिप्रकर्षेण पुलकयतीत्थं नयनोत्सवरूपे तस्मिञ्जने वीक्षिते सत्यभ्यसूयामर्षावकाशः कथं संभवितुमर्हतीति । ननु बलीयसा भर्तृवात्सल्याधिक्येन सर्वथा पराजीयमानस्य भ्रूचापभञ्जनादीङ्गिताकारचेष्टितैर्यथाशक्ति बहिर्व्यक्तीकृतस्यापि प्रणयकोपानुभावस्य कुतः सामर्थ्यम् ? कितवाचारोऽपि निकृष्टप्रकृतिरपि स धन्यो यं प्राणदयित इति बहुमन्यते स्नेहपूर्वं सभाजयते चेत्थंभूतं श्लाध्यसमाचारं प्रकृष्टस्वभावं मृदुलमृदुलचेतोवृत्ति कमनीयं स्त्रीरत्नं यदीयसुकुमारस्वभाववर्णनादयमपि शार्दूलविक्रीडितवृत्तधृक् स्तोकविप्रलम्भव्यञ्जनमिश्रितहृद्यसंभोगरसशाली श्लोकः स्वभाव्योक्त्यलंकाररत्नेन शोभतेतराम् ।

**सा पत्युः प्रथमेऽपराधसमये सख्योपदेशं विना**
**नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम् ।**
**स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला**
**बाला केवलमेव रोदिति लुठल्लोलोदकैरश्रुभिः ॥ २७ ॥**

आमरणपरस्परात्मसमर्पणशंसिनित्याविप्लुतस्नेहभक्तिव्रतमहित — स्यापि विवाहोत्सवस्य निरुपमप्रीतिविकासपूर्वमनुष्ठितस्य काले कियति संजाते प्रेमपात्रे परिणेतरि दौर्भाग्ययोगादपराद्धे सति प्राथमिकेन तस्यैव प्रणयापराधेन जात्वपरिचितत्वादुताहोस्विदात्मनो मौग्ध्यातिशयाद् वाक्त्रिमर्मकिंचित्करमात्मानमनुशोचन्तीं किंकर्तव्यतामूढचेतसं नवोढां तरुणीमुपविवर्णयिषुणा परमाणुवत्सूक्ष्मयौवतस्वभावपारदृश्वना कविवरेण सकरुणमभिधीयते यन्निजप्रियोद्वोढुः प्रथमे मन्मथविषयकदुश्चरितावसरे विश्वसनीयया प्रगल्भया सख्या दीयमानमुपदेशमन्तरेण प्रणयमानविषये नूनमात्मनोऽकिंचिज्ज्ञत्वाद्विलाससहितसुललितशरीरपरिवर्तनसाकूतभङ्गीभणितैः करणीयमपि तदपराधावबोधकं विधिं किंचिदपि नावगच्छति सा येन स्वभर्तृकर्तृकप्रणयभङ्गजनितातिशयमन्युवैश्वानरपरिदन्दह्यमानस्वान्तत्वेनातिमात्रनिर्वेददैन्यसंचारिभावपराबोभूयमानहृदयसौकुमार्यत्वेन च मौक्तिकधवलैः सद्योदुग्धदुग्धवदवदातगण्डभित्तिच्युतैरजस्रपनीपत्यमानचंचलोदबिन्दुभिर्बाष्पैः सर्वतोव्याप्तनयनेन्दीवरशोभिनी तरुणी केवलमेव सशोकं रोरुद्यते । खल्वयं प्रणयमन्युजकृपणविप्रलम्भशोकविकलोऽपि श्लोको निरन्तरनिपतदश्रुपूरपरिपूर्णनेत्रोत्पलाया मुग्धसुकुमारस्वभावख्यापकेन पर्यस्तनेत्रोत्पलेतिशब्दसूचितरूपकसहितेन स्वभाव्वोक्त्यलंकारेण विभूष्यतेऽपि चास्य वृत्तं तु पूर्ववच्छार्दूलविक्रीडितम् ।

**भवतु विदितं व्यर्थालापैरलं प्रिय गम्यतां**
**तनुरपि न ते दोषोऽस्माकं विधिस्तु पराङ्मुखः।**
**तव यदि तथारूढं प्रेम प्रपन्नमिमां दशां**
**प्रकृतितरले का नः पीडा गते हतजीविते ॥ २८ ॥**

प्रबलवनितान्तरप्रसवितप्रकटितप्रातिकूल्यस्य सान्द्रानुरक्तस्वीयजायावात्सल्यनिरपेक्षानुमेयनिरनुक्रोशमनोवृत्तेः सर्वथा मृषावादित्वाद् विश्वासानर्हस्यान्यत्रगतमनस्कत्वान्निर्दयस्य प्रियभाषिणोऽपि परातिसंधानशीलस्य स्वभर्तुर्निष्ठुतरप्रणयभङ्गेन हृदयंतपेन खण्डशः खण्डितत्वात् संजातजीवितनैराश्या तथा निश्चितप्राणपरित्यागाध्यवसाया यथापूर्वं वृथाप्रसादनवचनशतैः पौनःपुन्येनानुनयप्रयत्नं विदधानं तं निर्विण्णा काचिद्भार्या सावज्ञं ब्रवीति, प्रिय ! बहुशो विहितान्ययोषिदभिगमनपापेन त्वयेदानीं यद् यदभिधीयते तत्तत्थैव तिष्ठतु सर्वमेतत् तव दुश्चरितवृत्तान्तकदम्बकं सम्यग्ज्ञातमेवैतस्माद्धेतोर्मेऽपराध एको मर्षयितव्यस्त्वदायत्ते मयि विमुखी मा खलु भूरित्यादिभिर्मृषाप्रलापैः मोघीभूतैः कृतम्, एतादृशानि वृथावचांसि पुनर्मा कृथाः, यत्र तेऽनुरक्ता प्रेयसी निवसति तत्रैव सर्वात्मना झगिति त्वया साध्यताम्, स्वल्पमप्यत्र ते स्खलितं नास्ति किन्तु भागधेयमावयोरननुकूलमेव, तेन प्रकारेण परिबृंहितं ते प्रेम महिलान्तरसंगमेनेयतीमवस्थां प्राप्तं स्याच्चेत्तर्हि निसर्गभङ्गुरे दग्धजीवने व्यपेतेऽपि का तीव्रवेदना स्यात्, न कापीति। इह पराङ्गनासंभोगलक्षणे प्रियस्यागसि व्यक्तीकृतेऽपि तत्प्रतिषेधमनुक्त्वा केवलं गम्यतां का पीडा गते हतजीवित इत्यादिनात्मव्यापादननिश्चयशंसिना वचसा निषेधगर्भार्थविशेषस्याक्षिप्तत्वादाक्षेपालंकारविभूषिते हरिणीवृत्तयुजि पद्ये प्रिय तनुरपि न ते दोष इत्यनेन

सोत्प्रासवचसा परमार्थतोऽप्रिय ते दोषः सुमहानिति विपरीतार्थोऽवगम्यते प्रकृतितरले हतजीवित इत्यनेन वैराग्यख्यापकेन भणितेन जीवलोकस्य क्षणनश्वरत्वं च। बलवान् खलु स्त्रीणामनुरागो यदर्थममूल्यंमन्यमपि स्वस्वजीवितं तास्तृणवदुपेक्षेरन् प्रतिकूले तथा प्रतिविधेये प्रणयभङ्गे सति यथैव स्वदेशभक्ताः सर्वप्रजागणप्रियाः सत्पुरुषा देशविप्लवे।

**उरसि निहितस्तारो हारः कृतो जघने घने**
**कलकलवती काञ्ची पादौ रणन्मणिनूपुरौ।**
**प्रियमभिसरस्येवं मुग्धे त्वमाहतडिण्डिमा**
**यदि किमधिकत्रासोत्कम्पं दिशः समुदीक्षसे॥ २९॥**

कदाचन रहसि कृतसंकेतं कामुकमभिसरन्तीं साधारणरूपाजीवामिव स्फुटसंलक्ष्यसमुज्ज्वलवेषधारिणीं तारतरकलकलशब्दायमानमेखलाकूजत्तुलाकोटिकङ्कणाद्याभरणमण्डिताकृतिं मन्मथमदोन्मत्तत्वाद् दुर्दम्यरतिलालसां कान्तसंगमौत्सुक्यातिरेकतरलायमानहृदयत्वात् सम्यग्विस्मृताभिसरणावसरयोग्याकल्पविशेषां निर्विचारां कुलजामपि पुंश्चलीमेकां निशाम्य काचिदामूलानुभूतसंकेताभिसारसंभोगादिमान्मथमर्मकोविदा प्रौढा निन्दनीयमाभरणादिधारणदोषमवबोधयन्ती समाचष्टेऽयि निर्विवेके त्वया सावधानजनदृष्टिसमाकर्षकः प्रभास्वरो मौक्तिकहारो वक्षसि धृतः पीवरविशाले नितम्बबिम्बे रसन्सारशनमवबद्धं चरणगुल्फावलम्बितौ कलहंसकौ डमरुमभिताडयन्तीव सशब्दा त्वमित्थमेव कान्तमभिसरसि चेत् सभयवेपथु भीतहरिणीवेतस्ततः सर्वत्र किं न विलोकयसि? इत्यत्रोज्ज्वरनेपथ्यकिलकिलायमानाङ्गविभूषणधारणस्यात्मप्रकाशकत्वेन प्रतिषिद्धत्वादाक्षेपालंकारसमलंकृते हरिणीवृत्त-

शोभिनि श्लोके 'संलीना स्वेषु गात्रेषु मूकीकृतविभूषणा, अवगुण्ठनसंवीता कुलजाभिसरेद्यदि' इति साहित्यदर्पणप्रकटितलक्षणान्वितया कुलजाभिसारिकया सुष्ठु भवितव्यं न तु 'विचित्रोज्ज्वलवेषा तु रणन्नूपुरकंकणा प्रमोदस्मेरवदना स्याद् वेश्याभिसरेद्यदि' इतिवदिति संसूचितमत्र च त्वमाहतडिण्डिमेति सोत्प्रासनर्मगर्भितेन पदेन मदकलहंसकण्ठध्वनिवर्त्किलकिलशब्दकराभरणजालस्याप्रशस्तत्वं चरमपादेन च तस्या अभिसारिकायाः कुलसमुत्पन्नत्वं पृथग्विज्ञाप्यते । नन्वियमतिमौग्ध्येन सुरतलोभेन वावधीरितयोग्याकल्पा स्यादथवा केवलमात्मानं सोत्कण्ठं प्रतिपालयन्तं रमणं संतोषयितुमेवंप्रकारेण सुमण्डितसर्वाङ्गसुन्दरी स्यादिति मन्यामहे।

**मलयमरुतां व्राता वाता विकासितमल्लिका—**
**परिमलभरो भग्नो ग्रीष्मस्त्वमुत्सहसे यदि ।**
**घन घटय तं त्वं निःस्नेहं य एव निवर्तते**
**प्रभवति गवां किं नश्छिन्नं स एव धनंजयः ।। ३० ॥**

भृशमानन्दितसारसनिकुरुम्बाभिनन्दितेऽतिप्रमुदितकलापिकदम्बकताण्डवाडम्बरे नखंपचग्रैष्मिकसंतापशोषितप्रायशाद्वलविस्तरोज्जीवनकृति नैदाघतपनतपःक्लेशचिरतृषितनिःशेषस्थावरजङ्गमसमूहप्रमोदिनि दीर्घकालविरहितप्रणयिस्त्रीपुंससंयोजयितरि सौत्कण्ठाऽपेक्षितागमे वर्षासमये दार्ढीभूतविप्रयोगमन्युमृदितस्वान्ता काचित् प्रोषितभर्तृका प्राणवल्लभं भर्तारं समानेतुं वारिवाहं सकरुणं प्रार्थयते यन्मन्मथमथितानां जनानां कामानलोद्दीपनशीलानां मलयाद्रिचन्दनसमीरणानां निवहा दक्षिणादवासिषुस्तथापि स मे दयितो नायासीत् समुन्मेषितमल्लिकापुष्पसौगन्ध्यतर्पितघ्राणेन्द्रियो निदाघोपि

क्ष्यत्यैषीत् तथापि स न प्रत्यागमत्, हे जलद ! संप्रति त्वत्समयः समागतस्तेन त्वमुत्साहवान् भवसि चेत् तर्हि त्वमनागमनप्रकटित-निरपेक्षं निरनुक्रोशं तं मया सह संयोजय, किमस्माकं च्युतं भवेत्, न किमपि, यथा य एव धनसदृशं गोव्रजं प्रत्यानेतु शक्नोति स एव धनंजयस्तथा त्वद्विधा जलमुग्वरा मादृक्षीणां विरहिणीनां द्वितीय-जीवितभूतानां प्रोषितानां भर्तॄणां समानयने खलु पारयन्तीति मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थ इति कालिदासीयमेघदूते समुपलभ्यवचनवत् प्रावृषेण्यवारिदसंदर्शनेन कान्ताविरहातुराः प्रवासिनस्तत्समागमौत्सुक्यातिशयेनाग्रेऽग्रे प्रेर्यमाणाः कृच्छ्रेणापि विप्रकृष्टविदेशादपि सत्वरं विप्रयोगसमयानुपभुक्तनानासंभोगार्थयथातृप्तिनिर्वेशार्थमेव निजगेहं प्रति धावन्तीत्यर्थं व्यनक्ति विरहजनितविप्रलम्भशृङ्गारस-संसिक्तं हरिणीवृत्तसंदानितं मुक्तकमेतद् ' भुजङ्ग एव जानीते भुजङ्ग-चरणं सखे ' इतिवद् ' य एव गवां निवर्तने प्रभवति स एव धनंजयः, इति प्रसिद्धलोकोक्तौ यथा गोधनं व्यावर्तयितुं प्रभूष्णुरर्जुन एव समर्थस्तथा धनादिलिप्सासुदूरापहृतं प्रणयिनं भर्तारं समानेतुं प्रभ-विष्णुस्त्वं मेघ एव शक्नोसीति छेकोक्त्यार्थान्तरस्य गर्भीकृतत्वाच्छे-कोक्तिसंज्ञकेनालंकारेण समलंक्रियते च ।

**प्रातःप्रातरुपागतेन जनिता निर्निद्रता चक्षुषो—**

**मन्दाया मम गौरवं व्यपगतं प्रोत्पादितं लाघवम् ।**

**किं तद्यन्न कृतं त्वया मरणभीर्मुक्ता मया गम्यतां**

**दुःखं तिष्ठसि यच्च पथ्यमधुना कर्तास्मि तच्छ्रोष्यसि ।। ३१ ।।**

प्रतिरात्रमनभिमतप्रतिपक्षकामिन्या समं विविधमन्मथकेलिकलापं

यथारुचि स्वैरं स्वैरं समुपभोजं समुपभोजं केवलं प्रभातसमये वसति-निकेतनमागत्य निस्त्रपं दर्शितात्मानं न कर्हिचिदपि निधुवनसंभोगावकाशलेशमपि ददानं निस्त्रिंशमन्याप्रसवतं धवं दृष्ट्वा संजातहृद्वेदना विरहज्वरतातप्यमानसर्वावयवा शारीरकरोगेण सर्वथार्दिता मन्देव मानसिकपीडया सर्वशो मृदिता मन्दभागधेया सकरुणमर्थान्तरशंसिवक्रोक्तिन्यासेनोपालभते प्रतिप्रभातं स्वास्थ्यविशेषपिपृच्छिषया समायातेनाभीष्टजनरूपिणा त्वयैव निद्रालसाभ्यां नेत्राभ्यां दिवानिष्टा निद्रा सुखेनापनीता रोगिण्या ममास्वास्थ्यगरिमा व्यपेतो जनितविशेषः शारीरकलघिमा त्वदुपकारेण दिष्ट्या संजातो मे स्वास्थ्यसंपादनार्थं यद्यद् विधेयं तत्तत् किं न त्वया दयालुना न कृतं, कृतमेव, संप्रति सविशेषलाघवलाभेन भयानकमृत्युभीतिः सम्यङ्मया दूरीकृतात एव प्रत्याशादृढीकृतमनस्काहं जीविष्यामि, कथं दुःखमास्ते, भवानधुना प्रमुदितमनाः साधयतु, यद् योगक्षेमयोग्यं समीहितं करिष्यामि तत् त्वमपि नचिरेणाकर्णयिष्यसीत्येकमवरार्थं संसूचयन्ती पुनरपि, निशि निशि प्रतिद्वन्द्विवनिताभिगमनं कारं कारं प्रभाते प्रभातेऽत्र प्रत्यावृत्तेन कृतैनसा त्वया शतयामायमानायां त्रियामायां त्वद्विरहदुःखेन जागरं जागरं प्रातस्तने समये कथं चिल्लब्धनिद्रासुखाया मे चक्षुर्भ्यां स्वप्न इत्थमपनीतो मन्दभागिन्या मम गौरवमदृश्यतां गमितं किञ्च तुच्छत्वमेव प्रोत्पादितं, मां सावहेलमुपेक्षितुं त्वया यद्यत् कर्तव्यं तत्तत् सर्वं किं न कृतमत एव त्वया निष्ठुरहृदयेन त्यक्तया मयापि भयंकरपञ्चताभयमधुनैव त्यक्तम्, कथ सखेदमास्से, स्वीयकामिन्या तया नानासुरतविशेषान् पुनरनुभविष्यता त्वया निवस्तुं झटिति गम्यतां, यत् समीहितात्मव्यापादनलक्षणं पथ्यं विधास्यामि तदचिरेण श्रवणे करिष्यसीति हृदि कृतप्रधानार्थमभिव्यञ्जयन्ती । आत्महत्याध्यवसायपिशुनेनैवंविधेन वचसा भर्तुरङ्गनान्तरसंगमो निषिद्ध इत्याक्षेपालंकारसुमण्डिताकारे

तथा शार्दूलविक्रीडितवृत्तसंनद्धपादचतुष्टये खण्डिताया धीरप्रगल्भनायिकायाः कान्तविरहाभिशोचनशंसिनि श्लोकेऽत्रोपमालंकारभूषितस्य मन्दाया इतिशब्दस्य निरुपमा शक्तिः पूर्वसूचितार्थयुगलं सरसं प्रकाशयन्ती स्वप्रभया देदीप्यते ।

**सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः**
**सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम् ।**
**साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं**
**दोषैरन्यजनाश्रयैरपटवो जाताः स्म इत्यद्भुतम् ॥ ३२ ॥**

यथैव बाल्ये मनसोऽप्रागल्भ्यं युक्तं भवति तथैव सा दरमुकुलितसुमनःकलिकेव यौवनारम्भस्था षोडशवर्षदेशीया सांप्रतमप्यक्षतयोनिः कन्या वयं च तथाभूतं कन्यारत्नं कथमवाप्नुयामेति चिन्ताग्रस्तत्वादधृष्टचेतसो यथैव स्त्रीस्वभावे कातर्यं सांप्रतं विद्यते तथैव सा पुरुषेतरा दुर्लभा दुराक्रमणीया नारी वयं च केन प्रकारेण तां हस्ते कुर्वीमहीति संशयापन्ना दुर्विदग्धा यथैव गरीयोभारवहने खेदः संजायते तदैव सा गिरीयःपीवरोच्छ्रितवक्षोरुहकुम्भयुगलमस्मद्धस्तसंपर्काश्लेषार्हं वहति वयं चापि कदा परिस्पर्शनीयपीवरस्तन्यास्तस्या गाढकण्ठाश्लेषो भवितुमर्हतीति निश्चयराहित्येन परिखिन्नहृदया बोभूमो यथैव चातिशयभाराक्रांतस्य जनस्य गमनेऽसौष्ठवमुत्पद्यते तथैव सा नूनमतिभारायमाणेन गरिष्ठेन श्रोणीबिंबेन समाक्रान्तालसगजगामिनी पुनश्च वयमप्यस्मद्धस्तस्पर्शसंवाहनयोग्यस्य तस्याः पीवरनितम्बफलकस्यालाभेन दुःखितत्वादेकमपि पदं निक्षेप्तुमसमर्था इत्थं जनान्तरसमाश्रयिभिर्दोषैः सर्वतोऽस्वस्थाः संवृत्ताः स्म इति खलु महदाश्चर्यमिति लोभनीयाकृति-

विशेषशोशुभ्यमाने कस्मिंश्चित् कन्यारत्ने स्वयं स्निह्यता तदवाप्ति-लोलुपेन केनचिद् यूना सवितर्कं साशङ्कं चाभिधीयते ।

'विषं जलधरैः पीतं मूर्च्छिताः पथिकाङ्गनाः' इत्युदाहरणवत् सा बालेत्यादिकारणानां वयमप्रगल्भमनस इत्यादिकार्याणां चान्योन्यविरुद्धत्वस्य भिन्नदेशस्थत्वस्य शंसनेन भिन्नदेशतयात्यन्त कार्य–कारण–भूतयोः युगपद्धर्मयोर्यत्र ख्यातिः स्यादसंगतिः' इति काव्यप्रकाशकारोक्तलक्षणान्वितोऽसंगतिरलंकार एनं शार्दूलविक्रीडितवृत्तनिबद्धंश्लोकं विभूषयति । अत्र च दोषैरिति शब्दोऽर्थ-वैपरीत्येन गुणैरित्यभिप्रायोऽवगम्यतेपुनश्चात्र लंकेश्वरस्य दशमुखस्य रामवल्लभां सीतां प्रति स्वयं प्रदर्शितैकानुरागलक्षणवच्छृङ्गाराभासस्येव कस्य चिद् यूनोऽप्रकटितप्रभावायां स्पृहणीयायामपि प्रच्छन्नहृदयायां कस्यांचिदनुरक्तस्यैकानुरगित्वस्योभयानुरागवर्जितत्वात् कोऽप्यास्वादनीयरसोपन्यासो न दृश्यते तथाप्ययं श्लोको मदनमदरुचिरतारुण्योन्मत्तस्य यूनो दयनीयप्रेमभावप्रदर्शनेन हृदयंगमोत्तमकाव्यप्रबन्धायमान इव दरीदृश्यत इति कोऽत्र संदेहलेशावकाशः ?

**प्रस्थानं वलयैः कृतं प्रियसखैरस्त्रैरजस्रं गतं**
**धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः ।**
**यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता**
**गन्तव्ये सति जीवित प्रियसुहृत्सार्थः किमु त्यज्यते ।।३३।।**

केनाप्यविज्ञातेन कारणेन दूरवर्तिदेशान्तरगमननिश्चितमनसि निरुपमस्नेहास्पदीभूते प्राणदयिते भर्तरि भविष्यद्विरहदौर्भाग्यासहिष्णुतयोन्मनायमाना तं विना निमेषमात्रमपि न जिजीविषुर्वैमनस्यनैराश्यातिशयविह्वला स्वदग्धजीवितं सनिर्वेदं निन्दन्ती काचिदविधवाप्य चिरभाविना तदीयप्रवासेन विधवासदृशी स्वयमेवात्मानमुद्दिश्य प्रल-

पति हे जीवितहतक! प्रेष्ठे प्राणेश्वरे प्रवासायात्यनुरक्तामपि मां भार्यां परित्यज्य प्रस्थातुं कृतव्यवसाये सति कनकवलयभ्रंशरिक्तप्रकोष्ठस्य मेघदूतनायकस्य वलयवत् सुचिरधृतत्वात् प्रियसखसमानैरङ्गदैरपि तद्विप्रयोगासहत्वेनेव भाविविरहशोकाग्निजनितेन दौर्बल्यान्वित कार्श्येन हस्ताभ्यां गलद्‌भिः प्रयाणंकृतं दुस्सहविप्रलम्भवेदनया सहभाविभिः प्रियमित्रैः पतयालुभिर्बाष्पैरपि प्रस्थितं चिरकालसहवासित्वान्मित्रीभूतेन धैर्येणापि मुहूर्तमात्रमप्येकाकिनासितुमनिच्छताग्रे प्रयातं मम हृदये सुचिरमुषितत्वात् समीहितसुहृद्‌भूतेन चेतसापि पुरस्ताद् भर्त्रा सह यातुं दृढमध्यवसितमित्थं सर्वे बहुमताः सुहृदः समकालमेव प्रयाणं कृतवन्तस्तस्माद्धेतोर्हतजीवित ! त्वयाप्यवश्यं यातव्ये किमर्थं त्वयैवंभूतानि वलयादिमित्राणि ननु पश्चात्क्रियन्ते, तैः सह त्वमपि प्रस्थास्यमानेन भर्त्रा साकं प्रयाहीति ।

'गुणप्रधानभावावच्छिन्नसहार्थसम्बधोक्तिः' इति रसगङ्गाधरकृतलक्षणवत् तृतीयान्तशब्दैर्वलयादिभिः सहशब्दस्य प्रकाशितत्वात् सहोक्तिसंज्ञकालंकारसमलंकृते शोचनीयदैन्यसंचारिभावपुरस्सरभाविप्रवासजनिष्यद्विप्रलम्भशृङ्गाररसनिष्यन्दिनि शार्दूलविक्रीडितवृत्तकल्पितपादे श्लोकेऽत्र प्रोषितभर्तृकाभावे स्थातुमशक्तायाः स्निग्धप्रेमरससारार्द्रीकृतान्तःकरणाया भार्याया जीवितनिरपेक्षा सहृदयानामस्माकं हृदयानि सान्द्राश्रुप्रवाहेणार्द्रीकरोतीत्यतः परं किं विस्तरेण ?

**संदष्टेऽधरपल्लवे सचकितं हस्ताग्रमाधुन्वती**
**मा मा मुञ्च शठेति कोपवचनैरानर्तितभ्रूलता ।**
**सीत्काराञ्चितलोचना सरभसं यैश्चुम्बिता मानिनी**
**प्राप्तं तैरमृतं श्रमाय मथितो मूढैः सुरैः सागरः ॥३४॥**

क्षीरवारिधिविलोडनसमुत्थेनापि पीयूषेण किं प्रयोजनं लोकोत्तरचमत्कारिरसविशेषशालिनि मनोहारिणीनां रुचिरदृष्टिविभ्रमशोभिवदनेन्दुविजितचन्द्रबिम्बानां स्पृहणीयपीवरोन्नतस्तनीनां स्पर्शनीयजघनभारालसगतीनां नयनोत्सवप्रदरम्भोरूणां विलासिनीनां सर्वजित्यप्यतिशयम्रदिमपरिपूर्णे सर्वदमेऽप्यतिरुचिररससारस्वादिममयेऽधरपल्लवेऽमृतायमाने विद्यमाने सतीति शृङ्गारामृतरसज्ञो रसिकलोकैः शश्वदुपश्लोकितस्वर्धुनीहंसायमानयशा अस्मदीयः कविः कामपुरुषार्थस्यानिर्वचनीयं फलमवबोधयन्नाह यत् सुरतक्रीडारसलोलुभैर्दन्ताग्रैराहते किसलयसुकुमारेऽधरे चकितचकितकिलकिञ्चितपूर्वकमग्रहस्तं दोधूयमाना मा कृथा मा कृथा अलमलं मां विमुञ्च धूर्तेत्यलीकरोषवचोभिः साकं विरचितसलीलभ्रूकुटी चुम्बनपरमानन्दोच्चारितसीत्कृतिपूर्वं दरकूणितनेत्रद्वयी रतिलीलास्वरूपा वरवर्णिनी कामातुरैर्यैः कामिभिः ससंभ्रमावेगं परिचुम्बिता तैरैव वास्तविकं पीयूषं समर्जितमेव किन्तु मुखैर्दिविषद्भिः सुरासुरैः केवलं परिखेदाय दुग्धाब्धीर्वृथा मथित इति। अत्र यैश्चुम्बिता मानिनीति वाक्येन रतिशूराणामनेकपुरुषाणां पण्यविलासिन्यामिवैकस्यां स्त्रियां सान्द्रप्रसक्तिः स्त्रीपुरुषन्यायपथविरुद्धत्वादश्लीलजनकत्वाच्च कविना न विवक्षिता परन्तु मानिनीति जातावेकवचनप्रयुक्तेन शब्देनैकैकैर्रमणैः स्वकस्वकरमण्यः परिचुम्बिता इति विस्पष्टार्थः सुसूचयिषितः किञ्चात्र मनोज्ञसंभोगशृङ्गारसुधारसनिर्झरोक्षिते पूर्ववच्छार्दूलविक्रीडितवृत्तकल्पिताकारे श्लोके यथातथममृतमपह्नुत्य स्वादिष्ठाधरपल्लवस्यामृतत्वे निरूपितत्वादपह्नुत्यलंकारः प्रभासत इति नूनं योषितामौष्ठबिंबमेवासारे संसारे सारवत्सुधायते

**सुप्तोऽयं सखि सुप्यतामिति गताः सख्यस्ततोऽनन्तरं**

**प्रेमावेशितया मया तरलया न्यस्तं मुखं तन्मुखे।**

**ज्ञातेऽलीकनिमीलने नयनयोर्धूर्तस्य रोमाञ्चतो**
**लज्जासीन्मम तेन साप्यपहृता तत्कालयोग्यैः क्रमैः ।।३५।।**

निद्रासुखनिमग्नोऽयं ते प्रियतमो हे प्रियसहचरि त्वयापीदानीं सुप्तिसौख्यमनुभूयतामिति मां प्रति भाषित्वा शीघ्रसुरतसमुपभोगतृष्णयास्मान् बहिर्निगमयितुं कृतकृतकनिद्राव्याजोऽयं वञ्चनशील इति सम्यग्ज्ञाततदीयगूढभावाः सख्य निरयासिषुस्ततस्तासां निर्गमनात्समनन्तरं सर्वंकषमन्मथाभिनिवेशग्रस्तया रिरंसातरलायमानचेतसा मया परिचुम्बनाय स्ववदनं तदीयवदने सानुरागं न्यधायि तेन च मुखन्यासेन प्रहृष्टपुलकोद्‌गमाद् वञ्चकस्यापि हृद्यस्य तस्य निद्राव्यपदेशसहिते नेत्रयोः कपटमुकुलने विदिते सति समकालमेव मे व्रीडा समजनि परन्तु सापि क्षणिकत्रपा तेन पुष्पायुधरहस्यकोविदेन दयितेन तत्समयक्षमैर्निधुवनप्रस्तावशंसिभिश्चुम्बनालिङ्गनवस्त्रापहरणगात्रसंवाहनादिभिर्विधानैः सुदूरमपाहारीति यद्यदनङ्गरङ्गप्रसङ्गे तदानीं संभुक्तं तत्तत् सर्वं विश्वासपात्रभूतायै सहचर्यै सहर्षं निवेदयति तत्स्मरणस्मेरवदनारविन्दा मन्मथवशंवदा वात्सल्यानुकूलरमणसहवाससुखिता काचन तरुणी ।

खल्विहादिमपादेन विजने कान्तासंभोगप्रमोदप्रेप्सया प्रदोषसमये दृष्टियुगलं मुकुलीकृत्य मृषासुप्तस्य कान्तस्य निगूढाभिप्रायं संविद्य तं तया सह निर्विघ्नं मदनललितं रहसि यथेच्छं निर्वेशयितुं वयस्याभिर्निर्यातमिति, द्वितीयपादेनायं मे प्रेष्ठोऽवितथं निद्रित इति मत्वौत्सुक्यसंचारिभावाभिभूतत्वात् तन्मुखं निर्वितर्कं परिचुम्ब्य कामिन्या राग उद्दीपित इति, तृतीयतुरीयपादाभ्यां च प्रहृष्टपुलकपुरस्सरः परस्परानुरागिणोर्मन्मथमदातुरयोस्तयोः सुरतिमहामहः संजात इति निःसंशयं वितर्क्यते । निद्राव्यपदेशेन नयने निमील्य नायकेन संभोगाभिलाषस्य प्रच्छादितत्वाद् यथायथं 'व्याजोक्तिश्छ-

ग्नोद्भिन्नरूपवस्तुनिगूहनम्' इति काव्यप्रदीपकृतेन लक्षणेन 'निगूढमपि वस्तुनो रूपं कथमपि प्रभिन्नं केनापि व्यपदेशेन यदपह्नूयते सा व्याजोक्तिः 'इतिकाव्यप्रकाशकारसंपादितेन लक्षणेन चान्वितो व्याजोक्तिसंज्ञकालंकारः परिपूर्णसंभोगरसव्यञ्जकं शार्दूलविक्रीडितवृत्तोपेतं श्लोकमेनं समलंकरोति।

**कोपो यत्र भ्रुकुटिरचना निग्रहो यत्र मौनं**
**यत्रान्योन्यस्मितमनुनयो दृष्टिपातः प्रसादः।**
**तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं**
**त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः॥३६॥**

कदाचिन्निर्मर्यादेन वनितान्तराभिगमनादिकदुश्चरितेन कृतैनसे वल्लभाय क्रुध्यन्ती तदपराधातिशयखण्डिता धैर्यप्रागल्भ्यनिधिः प्रौढयौवना काचिद्भामिनी सामाद्युपायकदम्बकेन साग्रहं तेन सुचिरमनुनेनीयमाना चरमे तितिक्षया तदीयस्खलितमसह्यमपि कथंचिन्मर्षयितुकामा विदग्धोक्तिद्वारेण तमभिभाषते शृणु यत्र प्रेम्णि तरङ्गितभ्रुकुटिबन्ध एवामर्षः संतर्जनताडनादिकेनाविनीतेन रोषप्रकाशनस्याप्राप्तकालत्वान्मनस उद्वेजकत्वाच्च यत्र प्रेम्णि तूष्णींभावाङ्गीकार एव यथापराधदण्डो न तु काष्ठमयदण्डप्रयोगो वाक्पारुष्यकरणं वा, तादृशस्य प्रणयस्खलितेऽयोग्यत्वाद् यत्र प्रेम्णि परस्परस्मितिरेव स्वाभाविकी सफलानुनीतिर्नानाविधसान्त्वनोपायप्रयुक्त्या निश्चितानुनयसिद्धेः सदानपेक्ष्यत्वाद् यत्र प्रेम्णि स्नेहपूर्वकदृष्टिनिक्षेप एव सफलीभूतः सानुग्रहः प्रसाद उपहारदानप्रार्थनादिप्रक्रमेणापि सर्वदा मादृक्षीणां मानिनीनां प्रसन्नताया अलभ्यत्वात् तादृशस्यानिर्वचनीयस्य प्रशंसनीयस्य प्रेम्ण एवंविधो विध्वंसस्त्व-

त्कर्तृकप्रणयभङ्गेनाधुना संवृत्त:, पश्य, मामनुनिनीषुस्त्वं मदीयचरणौ समया प्रणिपातेन पांशुले भूस्थलपृष्ठे खल्वकुलीन इव परिलुठनं करोषि तथापि दुष्टाया मम कोपपरित्यागो न संजायत इति। इह दृष्टिपात: प्रसाद इति तुरीयवाक्ये यत्रशब्दस्य त्रुटिदोषोऽन्तिमपादे खलाया इत्यात्मनिन्दाशब्देनापराधिन: खलत्वं चानुमीयते किञ्चात्रेर्ष्याक्रोधान्वितप्रणयमानजनितविप्रलम्भरसकलुषिते तथा मन्दाक्रान्तवृत्तसंदानितचरणे मुक्तके मन्युमोक्षं करिष्यामीति विवक्षितस्य प्रधानार्थान्तरस्य विशेषसंपादनार्थं निषिध्य त्वं पादान्ते लुठसि न च मे मन्युमोक्ष: खलाया इति मानिन्योक्तत्वात् खलु समुत्पद्यत आक्षेपालंकारस्तथापि वक्रोक्तिकुशलाया विदग्धाया युष्मदीयनायिकाया मन्युमोक्षोऽचिरेण भवितेति विदित्वा भो ललितसंभोगरसरसिका: ! विषण्णा मा भूत यूयम्।

**सुतनु जहिहि मौनं पश्य पादानतं मां**
**न खलु तव कदाचित्कोप एवंविधोऽभूत्।**
**इति निगदिते नाथे तिर्यगामीलिताक्ष्या**
**नयनजलमनल्पं मुक्तमुक्तं न किंचित् ॥३७॥**

बहुकृत्वोऽन्यप्रमदाभिसरणादिलक्षणोत्पथप्रतिपन्नस्य दयितस्यापि धूर्तरूपिणोऽनेकसंख्यकैर्दुराचारैर्भृशं संजातासूयामर्षमन्युप्रकर्षाया अपि सुविनीतत्वादंतर्ज्वलितक्रोधाग्नि कृच्छ्रेण निगृह्योरीकृतवाचंयमताया: कथं कथमपि तेन प्रसाद्यमानाया: कस्याश्चित् कुल्याया: कोपशान्तिमुपविवर्णयिषुणा सूक्ष्मस्त्रैणतापारदृश्वनामरुणा यथानुरूपमुद्यतेऽयि मत्तकाशिनि ! अन्त:क्रोधसूचकं तूष्णींभावाग्रहं परित्यज त्वत्प्रसादलिप्सया सविनयमेवं चरणनिपतनं कुर्वाणं मां निरीक्षस्व कर्हिचिदपि मदपराधहेतुकस्तवामर्ष: खल्वित्थंभूतो नाभ-

वदिति भर्तरि व्याहरति सति साचिदरमुकुलितदृष्ट्या तया कोपनया स्वकोपप्रशमनशंसि प्रचुरं बाष्पं निपातितं किन्तु किंचिदपि नोच्चारितमिति । खल्विहादिमपादेन वामलोचने सुदति ! निसर्गसुकुमारमालतीजालकवत्प्रकृतिमृदुलसुवृत्तशीलापि कथं वामशीलेव दरीदृश्यसे ? त्वच्चरणयोः सकरुणं निपतितमपराद्धमपि जनमिमं प्रसन्नतास्मेरदृष्टिविक्षेपामृतसारेण सिञ्चती मधुरमधुरवचनपीयूषदानेन मम दयस्वेति द्वितीयपादे न खलु तव कदाचित् कोप एवंविधोऽभूदिति वाक्येनानेन भर्तुः पौनःपुनिकप्रणयभङ्गदूषितत्वमनेकापराधत्वं चेति चरमपादेऽनल्पाश्रुमोचनेन सदयहृदयाया भार्याया गत्यन्तराभावेन कोपशान्तिः सुचिरादुदपादीति च विद्मो वयम् । अत्रत्यमानिनीवन्मृदुस्वभावोपेतमालिनीवृत्तमण्डितमेनं रुचिरं श्लोकं समलंकुरुतेऽमर्षप्रशान्तिसमुत्थः समाहितालंकारो यद्द्वारा प्रणयमानजशोच्यविप्रलम्भरसोऽपि नूनमतिहृद्यसंभोगशृङ्गारामृतरसेन पुरा परिणमतीत्यत्र का शङ्का ?

**गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा**
**सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।**
**मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी**
**सुप्ता किं नु मृता नु किं मनसि किं लीना विलीना नु किम् ॥ ३८॥**

अहो परमार्थतोऽद्भुतमेतद् यदनिर्वचनीयनिर्दोष–निरुपमरागोद्रेकव्याप्तमनोहारिशृङ्गारिकाव्यसुधासारनिरन्तरलिलिक्षूणां शाश्वतयशस्करकाव्यप्रबन्धगुणदोषतारतम्यपरिशीलननिष्णातानामस्माकं सर्वदमप्रभूष्णुरागरज्जुरज्जुदृढतरसंदानितानि मान्मथप्रमोदव्यतिरेकविमोहिताभ्यन्तरमर्माणि मनांस्यपि सुदूरेऽपहृत्य सर्वलोक-

मोहनमनोजन्मरागसागरे चमत्कारिणि मनोज्ञविचित्ररसतन्मये निमज्जयत् तत्रैव विलाययति नूनं पद्यनिबन्धसहस्रायमानं निर्वाच्यकाव्यसुषमाजाज्वल्यमानसुविरचितसर्वाङ्गप्रदर्शनजनितरसिकजनलोमहर्षणं सुस्वादुसंभोगशृङ्गारमदजलोपहारि श्लोकरत्नमेतद् यस्मिन् सुभगः कश्चिद् युवा हृदयंगमचेतोभूमहोत्सवपर्यवसाने चैतन्यनाशजडीकृतेन्द्रियग्रामामिव सर्वावयवप्रहर्षयित्नुसुरतज्वरद्रवीभूतां स्ववरारोहां सावधानं दर्शं दर्शमित्थादुपवर्णयति यन्नीरन्ध्रेण मदीयसमालिङ्गनेन दृढतरमृदितयोर्वक्षोरुहकलशयोः प्रहर्षातिशयात् स्वयं प्रोद्भिन्नेन रोमहर्षणेन शोभमाना तथा निर्भरप्रेमनिर्झरप्रकर्षेणातिस्पर्शनीयपीवरश्रोणिबिम्बाद् विस्रंसमानेनाधोवस्त्रेण नग्नप्राया समनन्तरमेवायि मदभिमानछिद् ! मेवं कृथाः खलु मा पिपीडो मामतिमात्रमलभिति मदालिङ्गनप्रत्याख्यानव्याजेन हृदिस्पृग्मन्मथयुद्धरसद्योतकमर्धोक्तदुर्बलवचनं सहस्तक्षेपं प्रलपन्तीयं हृदयदयिता विश्लथीभूतगात्रलता किं नु निद्रिता किं नु प्रलयं गताथवा मनसि मे निमग्नाहोस्वित् संभोगरससायुज्यं प्राप्तत्वाद् द्रवीभूता नु किमिति संशयानो यथायोग्यं निश्चेतुमपि न शक्नोम्यहमिति । इत्थंकारमत्र 'जीवनग्रहणे नम्रा गृहीत्वा पुनरुन्नताः किं कनिष्ठाः किमु ज्येष्ठा घटीयन्त्रस्य दुर्जनाः ' इति कुवलयानन्दाख्यसंदर्भोद्धृतोदाहरणवत् सुप्ता किं नु मृता नु किमित्यादिना ससंशयेनातिशयोक्तिगर्भेणान्तिमपादेनानिर्णयस्योपवर्णनात् संदेहालंकारविभूषिते शार्दूलविक्रीडितवृत्तनियमितचरणे श्लोकरत्ने मा मा मानद माति मामिति चेतोहारिसमदमदनयुद्धव्याकुलितार्धोक्तौ कृथाः पिपीड इत्यादिक्रियापदन्यूनतापि रतिरागातिशयद्योतकतया गुणवती सती ध्रुवं श्रवणपेया बोभोतीत्यस्य पद्यस्य प्रकृष्टमधुरिमाणमास्वादमास्वादं रसवद्रागवारिधौ वयमपि निमग्नाः किं नु विलीनाः किं न्विति न निश्चिनुमहे ।

पटालग्ने पत्यौ नमयति मुखं जातविनया
हठाश्लेषं वाञ्छत्यपहरति गात्राणि निभृतम् ।
न शक्नोत्याख्यातुं स्मितमुखसखीदत्तनयना
ह्रिया ताम्यत्यन्तः प्रथमपरिहासे नववधूः ॥ ३९ ॥

क्षणनश्वरे मृगतृष्णिकांभसीवेहत्ये निर्बले जीवलोकेऽपि यावज्जीवं जीवसाफल्यसाधनैकमार्गभूतादामुक्तिसमर्पितपरस्परात्मनः परिणयोत्सवादनन्तरं विश्वासपात्रीभूतसहचरीजनसमक्षमपि पुष्पसायकनिर्दयविमुक्तप्रथमसायकाहतस्याभिनवविवाहजनितरतिरससिस्वादिषया प्रारब्धमदनकेलिप्रस्तावनस्य पाणिग्रहीतुरतिवैलक्ष्यजनकेन नर्मणातीव ह्लीणा नवपरिणया वधूः किं करोत्विति तस्या अक्षतकन्याभावाया ध्रुवं दयमानेनेवास्मत्कविना सरसं व्याह्लियते यदुल्लसद्रागपारवश्यवशीकृते परिणेतरि वैवाहिकपरिधानांशुकावलम्बिनि किंकर्तव्यताव्याकुलहृदयवत्तया केवलमाकारगोपनाय समाश्रितविनया वदनमधस्तान्नम्रीकुरुते तस्मिन् सरभसं दोर्भ्यां परिरब्धुं कामयमाने सति सा तूष्णीमङ्गानि तस्मादन्यत आकर्षतीत्थं प्राथमिके वैवाहिकनर्मविकासे निर्भरवैलक्ष्यलज्जासंकुला किंचिदपि वक्तुमसमर्था लज्जालुदृष्टिविक्षेपेण स्मेरमुखीः सखीस्तिर्यक् पश्यन्ती व्रीडातिरेकेण नवोढा वधूस्ताम्यतितमामिति । संप्रत्यप्यक्षतमदनालयकन्याभावस्थत्वात् सर्वथा खल्वपरिचितसंभोगविलासायास्तथातिमौग्ध्यात् तत्कालोचितकामोपचारचातुर्यविहीनाया गात्रसंकोचनत्रपावैमुख्यपूर्वकनैसर्गिकचेष्टितवर्णनसमुत्थेन जात्यलंकारेणाथवा स्वभावोक्त्यलंकारेण वरवधूनवसङ्गमोत्थसंभोगशृङ्गाररसव्यञ्जकः शिखरिणीवृत्तसंनद्धपादचतुष्टयो श्लोकोऽयमभिनवसङ्गममाधुर्येण रसाभिज्ञानां चेतांसि प्रमोदयितुं विभूष्यमाणः शोभते ।

**नापेतोऽनुनयेन यः प्रियसुहृद्वाक्यैर्न यः संहृतो**
**यो दीर्घं दिवसं विषह्य विषमं यत्नात् कथंचिद्धृतः।**
**अन्योन्यस्य हृते मुखे निहितयोस्तिर्यक्कथंचिद्दृशोः**
**स द्वाभ्यामतिविस्मृतव्यतिकरो मानो विहस्योज्झितः ॥ ४० ॥**

इतरेतरसान्द्रानुरागानुकूलयोरपि प्रणयिस्त्रीपुंसयोर्दुर्वार-निर्वेददौर्मनस्यवैलक्ष्यजनकेन किसलयसुकुमारहृदयदाहकेन प्रणय-कलहेन, न तु कारणान्तरेण समुत्पादितोऽसहनीयोऽपि दुर्निग्रहोऽनिष्टोऽपि दुर्दम्यो मनःसंतापनोऽपि दुरुच्छेदो दग्धमानो न केनाप्युपायेन न केनापि प्रकारेण न केनाप्यन्येन प्रतिक्रियाविधानेन वा प्रशान्तिं प्राप्नोति किन्तु प्रणयकलहजत्वेन केवलं प्रणयस्मितिसमुन्मेषेणैव स्वयं समुपजोषं प्रशाम्यतीति विवदिषयास्मदीयशृङ्गारिकाव्यकारेण कयोश्चित् परस्परानुकूलवात्सल्यपाशबद्धहृदययोर्यौवनस्थयोर्दंपत्योर्मानचेष्टेत्थंप्रकारेण निर्वर्ण्यते यद्योऽमर्षः प्रशमनाय प्रयुक्तेन चिन्त्याचिन्त्येन सर्वेणानुनयविधिनापि न व्यपेतो यः प्रियसुहृदां सखीनां प्रसादनमन्त्रशतैरपि न परित्याजितो यश्च दुःखकरत्वेन विषमं दुर्विषहत्वेन दीर्घमासायमानमतिकष्टं वासरमेकं कृच्छ्रात् क्षामं क्षाममात्मलाघवपरिजिहीर्षया प्रयत्नेन कथमपि परिरक्षितः सोऽमर्षोऽस्तंगते सहस्रदीधितौ समायाते प्रदोषे परस्परस्य विमुखीभूतं वदनं प्रति साचीकृत्य कथं कथमपि प्रणिहितयोर्नेत्रयोः सत्योस्ताभ्यां जंपतीभ्यामतिमात्रं विस्मृतसंसर्गः सन् स्मित्वा परित्यक्तः। इत्यन्योन्यविलक्षदृष्टिचतुरे तस्मिन्नवस्थान्तरे सव्याजं हसितं मया धृतिहरो मुक्तस्तु बाष्पस्तयेति दृष्टचरकविवाक्यवत् साग्रहानुनयादिभिर्बहुभिः प्रतिविधिभिरप्यत्याजितस्य प्रणयमानस्य पथ्येन स्मितेनैव स्वयं प्रशमितत्वादनन्तरभाविमनोज्ञसंभोगशृङ्गाराङ्ग-

भूतकोपशान्तिसूचक: समाहितालंकार: शार्दूलविक्रीडितवृत्तशालिनो मुक्तकस्यास्य शोभनाकृतिमधिकं शोभयतीति सौख्यैकतानमधुर-संभोगशृङ्गारेऽपि कदाचित्कदाचित् कटुप्रणयमानः संजायेत चेत् तिक्तव्यञ्जनमिश्रितमिष्टान्नवत् सोऽपि प्रत्युत स्वादीयान् भवेत् ।

**गते प्रेमाबन्धे प्रणयबहुमाने विगलिते**

**निवृत्ते सद्भावे जने इव जने गच्छति पुरः ।**

**तदुत्प्रेक्ष्योत्प्रेक्ष्य प्रियसखि गतांस्तांश्च दिवसान्**

**न जाने को हेतुर्दलति शतधा यन्न हृदयम् ॥ ४१ ॥**

हस्तादकाण्डे विगलितस्य शतधा खण्डितस्य दुर्बलस्य काच-भाजनस्येव हृदयकूपाद् यदृच्छयापसृतस्य खण्डशच्छिन्नस्य फल्गोः साररहितस्य प्रणयस्याप्रतिविधेयेन वैशसेन दुर्विगाह्यशोकसागरां-भस्यामस्तकचरणपर्यन्तमन्तर्बहिः प्रसह्य स्नपिता काचिद्भामिनी सनिर्वेदं सर्वथा गर्हणीयदैवदुर्विपाकजमात्मन इदानींतनदशान्तरम-भिशोशुच्यमाना तथा रमणेन सह यावदीप्सितं तदानींतनसंगमसुख-मपि सोत्कण्ठमनुस्मारमनुस्मारं सहचरीं प्रति प्रलपति हा प्रियसखि हा दृढबद्धपरस्परहृदयेऽपि स्नेहपाशे खण्डितेऽनुरागजनितगौरवोपेते-ऽभिमाने विध्वस्तेऽन्योन्यस्य सौहार्दे व्यपगते मदधीनेऽपि दयितजने तटस्थजन इवौदासीन्येनाग्रतोऽपसरति सति तदनुरागवैशसमन्तः-करणमर्मभेदि च तदानीं यथातृप्तिनिर्विष्टनिरुपमानङ्गलीलांपुर-स्सरविविधसंभोगार्थसमुपभोगमनोहराणि तानि तानि सुखमयानि तृप्तिमयानि प्रमोदमयानि रोमाञ्चमयानि वासराण्यनुस्मृत्यानु-स्मृत्यापि संप्रति हतहृदयं मे सहस्रधा न भिनत्ति यदत्र किं कारण-मिति न सम्यग्वेद्मीति । खल्विह पूर्वार्धे उपलक्ष्यमाणस्य प्रणय-

भङ्गरूपस्य हेतोरुत्तरार्धेऽवगम्यमानेन हृदयविदलनरूपेण हेतुमता कार्येण सार्धमुपवर्णनोत्थेन हेत्वलंकारेण शिखरिणीवृत्तनिबद्धचतुष्पदो निर्वेदसंचारिभावपरिपूर्णकरुणविप्रलम्भशृङ्गारबाष्पप्रवाहकलुषित-रसिकजनहृदयस्तीव्रवेदनामय इव दुःखमय इव नैराश्यावलम्बी श्लोकोऽयं समर्थ्यत इति वयमपि स्नेहविनाशविदलितेयं मनस्विनीव दुःखीयन्तस्तस्यास्तपस्विन्याः कृते मुक्तकण्ठमाक्रोशाम रे रे दग्ध-हृदय ! तस्या जीविताशाभूतं प्रणयं खण्डशः खण्डशो विदारितं दृष्ट्वापि निर्विकारं ध्रियसे, कथं शतधा न स्फुटसि ?

**चिरविरहिणोरत्युत्कण्ठाश्लथीकृतगात्रयो–**
**र्नवमिव जगज्जातं भूयश्चिरादभिनन्दतोः ।**
**कथमपि दिने दीर्घे याते निशामधिरूढयोः**
**प्रसरति कथा बह्वी यूनोर्यथा न तथा रतिः ॥ ४२ ॥**

वस्तुतो दुर्विषहहृच्छूलायमानेन तीक्ष्णमकरध्वजसहेलोद्दी-पितमुर्मुरस्फुलिङ्गायमानेनानिर्वचनीयस्नेहबहुमानानुकूलस्य भर्तुर्दे-शान्तरप्रवासेन यद् भुवनं स्थाणुस्थितिमत्त्वादनश्वरमपि विनष्ट-मिवामानि तत्तातप्यमानवियोगतनूनपादन्तकेन प्रीतिपूर्वं सुदूरप्रसा-रिताभ्यां प्रमोदप्रकर्षपुलकिताभ्यां भुजाभ्यां गाढं परिरभ्याभिन-न्दनीयेन समागमेन पुनः संजातमिवादर्शि नूनमिति वक्तुं प्रक्रमतेऽ-स्माभिर्बहुमतोऽमरुकविर्यद् बहुतिथकालावधिना संतप्तविरहाशु-शुक्षणिना दग्धप्राययोरौत्सुक्यातिरेकेण शिथिलायमानशरीरयोः पुनःसंगमं लब्ध्वा परस्परं यथेच्छमभिनन्दतोर्दीर्घकालविरहितयोस्त-रुणदंपत्योः कृते चिरात् सोऽयं नष्टपूर्वो जीवलोकः प्रत्यग्र इव संतुष्टितन्मय इव कमनीयः संवृत्तः किन्तु दूरवर्तिनो विदेशाद् गृहागमनसमनन्तरं बहोः कालादितरेतरदर्शनसौख्यप्रहृष्टमनसाम-

भिवाद्यमानानामन्तरान्तराभिवादयमानानां यथाज्येष्ठं प्राप्तकालोपचारक्रियार्हाणां प्रियबान्धवसुहृज्जनानां सान्निध्ये तयोर्मध्ये परस्परसंलापालिङ्गनपरिचुम्बनादीनामनुरागव्यञ्जकचेष्टानामचिन्त्यत्वाद् द्राघीयसि तस्मिन्नह्नि कृच्छ्रादतिवाहिते ततो भृशमभिलषितां त्रियामां सहर्षमवाप्तयोस्तयोर्नूनं दीर्घीभूतप्रवाससमयनिर्विष्टनानाविधवार्तानिकुरम्बपर्यनुयोगोत्तरदाननैरन्तर्येण चिरविरहकालराशीभूतगृहबन्धुमित्रगणादिविषयकबहुविधवृत्तान्तसंचयकथनाकर्णनपराम्पराभिश्च प्रचुरीभवत् स्निग्धसंभाषणमाप्रभातं यथा प्रसेस्त्रीयते तथा विप्रयोगसमये सुचिरमनुपभुक्तत्वात्पुञ्जीभूतोत्कलिकासहस्रसमन्वितार्द्रार्द्रप्रेमरसोऽपि सुरतोत्सवस्त्रियामायामपि मुहूर्तमात्रायमानायां विभावर्यामविच्छिन्नकथारसप्रसरमन्तरा विरलविरलक्रियमाणत्वान्न प्रसेस्त्रीयत इति । शोचनीयप्रवासविप्रलम्भानन्तरोत्पन्नाभिनवसंभोगशृङ्गाररसार्द्रीकृतजनमनसि प्रमुदितहरिणीवृत्तयुजि पद्येऽत्र संगमप्रमोदनरीनृत्यमानहृदययोः प्रणयिणोस्तरुणयोर्नैसर्गिकसमागमावस्थाप्रदर्शनाज्जात्यलंकारोऽत्र च वियोगेन पूर्वं पृथक्कृतयोरिदानीं संगमेन पुनरेकीभूतयोस्तयोर्मन्मथयुद्धादप्यधिकसंतोषावहेणान्योन्योदन्तकथनेन निद्रालेशमन्तरेण यथासुखमतिवाह्यते सा निशीथिनीति संसूच्यते ।

**दीर्घा वन्दनमालिका विरचिता दृष्टचैव नेन्दीवरैः**
**पुष्पाणां प्रकरः स्मितेन रचितो नो कुन्दजात्यादिभिः ।**
**दत्तः स्वेदमुचा पयोधरभरेणार्घो न कुम्भाम्भसा**
**स्वैरेवावयवैः प्रियस्य विशतस्तन्व्या कृतं मंगलम् ॥ ४३ ॥**

विप्रकृष्टं जनपदान्तरमध्युष्य परिक्लेशावहादध्वमार्गात्

कान्तादर्शनौत्सुक्यप्रेरितद्रुततरगतौ प्राणदयिते पत्यौ सुचिरात्स्ववसतिगृहं प्रत्यागते वासकसज्जिका प्रवासविप्रलम्भसंतापदग्धकल्पापि धृतिकरतत्समागमोच्छ्वासोज्जीवितजीविताशा विरहणी किमकार्षीदित्यवबुभुत्सायां शृङ्गारिकविशिरोमणिना निर्भरकामातुरप्रणयिजनभावसौक्ष्म्यपारगेणास्मदीयकविपुंगवेन सुरसं व्याह्रियते यत् स्वीयभर्तुर्गृहप्रवेशमहोत्सवे समुत्पन्ने दीर्घाभिनन्दसुमनोमाला प्रीत्युत्फुल्लया निसर्गरमणीयया दृशैव न तु वास्तविकैर्नीलोत्पलवृन्दैर्गुम्फिता स्वागतार्थं विस्तृतं विक्षेप्य: कुसुमानां राशि: प्रमोदविकसितेन प्रकृतिसुषमेण स्मितेन न तु माध्यमालतीप्रमुखैस्तात्त्विकै: कुसुमै: संपादित: सप्रश्रयोपचारायोपहरणीयं पाद्यादिकं संतोषातिशयप्रहृष्टपुलकेन स्वेदाम्बुनिस्यन्दिना स्वभावचारुणा पयोधरकलशभारेण तस्मै दयिताय विश्राणितं न तु याथार्थिकेन कलशवारिणैवंप्रकारेण महार्घैर्नैसर्गिकलावण्यवद्भिरिन्दीवरकुन्दकुम्भादिचैतन्यरहितैर्वस्तुभिरनुपमेयै: स्वकीयैरङ्गैरेव स्वनिकेतनं सहर्षं प्रविशत: प्रेमपात्रस्य पत्युर्मांगल्यं कृशोदर्या पीनस्तन्या भार्यया प्रीतिपूर्वमकारीति । खल्वयं सुरसमञ्जुलोऽङ्गीकृतशार्दूलविक्रीडितवृत्तशोभी परस्परानुरक्तमिथुनसंगमजहृद्यसंभोगामोदविकस्वराकृति: श्लोको दृष्टयैवेन्दीवरैरिति ताद्रूप्येण निरूप्य निषेधव्यञ्जकेन नशब्दप्रयोगेणोपमानभूतानामिन्दीवरादीनां तिरस्कृतत्वाद् रूपकसहिताक्षेपालंकारेण विभूष्यमाण: शोशुभ्यत इति विचारं विचारं ब्रूम: कान्तसमागमप्रमुदिताया वरवर्णिन्या आमोदतरलयोर्दृशो: सत्योर्नीलोत्पलै: किं, प्रमोदामृतरसवाहे स्मिते सति कुन्दादिपुष्पै: किं, स्पृहणीये पयोधरयुगले विद्यमाने कलशै: किं प्रयोजनं यथा तस्या निरुपमावयवा निखिलोपमानवस्तूनि परमार्थत: सावलेपं पश्चात्कुर्वत इति ।

**कान्ते सागसि शापिते प्रियसखीवेषं विधायागते**
**भ्रान्त्यालिङ्ग्य मया रहस्यमुदितं तत्संगमाकांक्षया।**
**मुग्धे दुष्करमेतदित्यतितमामुद्दामहासं बला–**
**दाश्लिष्य च्छलितास्मि तेन कितवेनाद्य प्रदोषागमे ॥ ४४ ॥**

चाटुकारमपि प्राणनाथं रोषादपास्य या पश्चात्तापमवाप्नोति कलहान्तरिता तु सेति साहित्यदर्पणव्यक्तीकृतलक्षणोपेता काचित् प्रणयामर्षस्फुटनेन साग्रहानुनयाभिनिविष्टं दयितं सशपथं निरस्य तदनन्तरं कथं नाम हताशया मया दयितजनं प्रतीत्थं समाचरितमिति निर्वायानुतापतातप्यमानोपांशु तदीयप्रत्यागमनमनोरथशतमेव समाश्रित्य दुःखीयन्ती स्थिता ततः सायंसमये प्रियसहचरीवेषधारिणा तेनागत्य परिचुम्बिता चण्डी प्रत्ययितायै वयस्यायै परिहासगर्भ-रहस्यवृत्तान्तं कथापयति हे धूर्त कृतिकृत्वस्तथाविधे कुपथे पतित्वा कृतिधा तादृशीं कुचर्यां कृतवान्नसि, इतोऽपसर, मा भूयोऽपि मदीयगेहं प्रविक्षस्त्वमित्यहं सशापोत्सर्गमाक्रुश्यापराधिनमात्मनः कामुकं निराकृतवती ततो दरतमिस्रे निशामुखे मद्दर्शनाय समायातां कांचित् प्रियसखीं ससंभ्रमं परिरभ्य निष्कासितेन तेन पुनः संजिगमिषुर्निर्विचारा भूत्वामुकेन हेतुना प्राणनाथं सहेलं निरस्य दुर्भर-मनुशयमनुबोभोमि किन्त्विदानीं तेन विनाकृताहं न जिजीविषामि तत् तमत्रानयेत्यादिरहस्यवचनं तस्यै सकरुणं व्याहृतवती, हंहो महदाश्चर्यम् ! अयि सखि सा कासीदिति मन्यसे न कापि परन्तु विश्वसनीयवयस्यावेषं कापट्येन परिधाय सखीव प्रादुर्भूतो महावञ्चको मे कान्त आसीद् यमहमाश्लिष्याकथनीयमपि रहः कथितवती मन्दबुद्धिः क्षीणभागधेया किञ्च सोऽपि तदा सुन्दरि ! प्रणयकलहकोपवशान्मन्निरसनसमये यदेतत् त्वया निगदितं तन्मे

दुष्करमित्यतिशयप्रमुक्तकण्ठं विहस्य बलात्कारेण मां समालिङ्गितवान्नित्येवंप्रकारेण हे सखि तेन दुर्बुद्धिनोदितभाग्येन कितवेनाद्येषत्तमिस्रे तमिस्राप्रारम्भे मन्दधीर्निर्भाग्या प्रकामं वञ्चितास्मीति। अञ्जसा दुर्ललितेनापि निपुणेन कामवश्येनापि कामरूपेणेव कामुकेन स्त्रीवेषपरीधानकैतवद्वारा कोपनापि कामवशंवदा कामिनीयमतिसंधीयते स्मेति युक्त्यलंकारः पूर्ववच्छार्दूलविक्रीडितवृत्तसूत्रितं संभोगशृङ्गाररसमयमप्युल्बणहासरसगर्भमेनं सुरसकाव्यरसिकानतिशयनर्मस्फोटेन परिहासयितुमिव समलंकरोति।

**आशङ्क्य प्रणतिं पटान्तपिहितौ पादौ करोत्यादरा–**
**द्व्याजेनागतमावृणोति हसितं न स्पष्टमुद्वीक्षते।**
**मय्यालापवति प्रतीपवचनं सख्या सहाभाषते**
**तन्व्यास्तिष्ठतु निर्भरप्रणयिता मानोऽपि रम्योदयः॥ ४५॥**

अविचारिणोऽपि त्वयि सान्द्रानुरक्तस्य मे तुच्छः प्रणयस्खलितलेशो मर्षयितव्य इति सान्त्वनवचनपूर्वं नूनमेष प्रणिपातं विधास्यतीति मनसि संशय्य कृशाङ्गी साप्रपदीनस्य परिधानस्याञ्चलेन प्रणिपातपरिहाराय संछादितौ चरणौ विधत्तेऽयं मे कान्तो हास्यास्पदमिति वितर्क्य वदने यदृच्छया प्रादुर्भूतं रमणीयं स्मितिविकासमनिष्टमिव वैमुख्यादिच्छद्मना तिरयति किंस्विद् वैमनस्यवशान्नु वैलक्ष्यपारवश्यान्नु स्तोकाधोमुखी सती व्यक्तं मां नावलोकयतीर्ष्यामर्षजनितमनःसंतापात् कथमप्यात्मानं तां चोच्छ्वासयितुं मयि ब्रुवाणेऽपि त्वदालापं न किंचिदपि शुश्रूषेऽहमितीव विमुखीभूय स्वीयया वयस्यया साकमन्यद्विपरीतवचो निगदति चेत्थात् प्रातिलोम्यमागृह्य प्रातीपिकं मानसिकपथमनुसरन्त्या वरारोहाया दुर्विगाहानुरक्तता तावदास्तां यावदभ्यसूयामर्षोऽपि मन्मनोहारित्वाददभु-

तरसमयत्वाच्चातिकमनीयोद्भेदो भवतीति प्रागनुभूतस्याप्यद्यैव संवृत्तस्येव विरहानलसंतातप्यमाने मनसि सौत्सुक्यमुत्प्रेक्ष्यमाणस्य न कर्हिचिदपि विस्मरणीयाया निर्भरस्नेहभाजनीभूताया मनस्विन्याः प्रणयमानोदन्तस्यानुस्मारमनुस्मारं तांस्तान् सुखितान् तया सह संभोगार्थोपभोगेष्वतिवाहितान् वासरान् चानुचिन्तमनुचिन्तमत्युल्बणोत्कलिकामयेऽतिशयनिर्वेदप्रायेऽतिगाढे शोकाभिलाषवारिधौ सुतरां निमज्जति तपस्वी कश्चन विरही। 'अखिलेषु विहङ्गेषु हन्त स्वच्छन्दचारिषु शुक पञ्जरबन्धस्ते मधुराणां गिरां फलम्' इत्युदाहरणवदत्रापि प्रणये दौर्मनस्यजनकत्वाद्दोषरूपो मानोऽपि रम्योदय इति गुणत्वे कल्पितत्वाल्लेशालंकार उत्पनीपद्यमानेन दुर्भरविप्रलम्भशोकरसेन मृदुहृदयान्नस्मान्नभिशोचयन्तमेनं श्लोकं शार्दूलविक्रीडितवृत्तेन समं परिपूर्णार्थीचरीकर्ति।

**यावन्त्येव पदान्यलीकवचनैरालीजनैः पाठिता**
**तावन्त्येव कृतागसो द्रुततरं संलप्य पत्युः पुरः।**
**प्रारभे परतो यथा मनसिजस्येच्छा तथा वर्तितुं**
**प्रेम्णो मौग्ध्यविभूषणस्य सहजः कोऽप्येष कान्तः क्रमः॥ ४६॥**

अयि मौग्ध्यविभूषणे! भर्तरि विहितदुश्चरितेऽपीर्ष्यारोषौ हृदि निगृह्य प्रशंसार्हसौजन्यसौशील्यवशंवदतया केवलमेकाकिनी विजनेऽरण्यरुदितं कुरुषे, पश्य, परमार्थतो विफलेनारण्यरुदितेन स्वदुराचारमनुशय्य ते भर्ता परस्परस्नेहद्रोहि तादृशं पापं भूयो न समाचरिष्यतीति वृथा मन्यसे हा मुग्धे! अतिप्राप्तकालं प्रतिविधानं त्वामध्यापयामः, किं बहुना, प्रणयमानव्यक्तीकरणायैवमेवं कुरुष्वेति भर्तृव्यलीकनिन्दकैर्वाक्यैर्यावन्तः समीचीनाः शब्दाः सखीगणेन शिक्षिता काचिदतिमुग्धा भार्या तदानीं समाचरितकिल्बिषस्य

तस्याग्रतः कर्णे कृतान् तावतः कृत्रिमान् शब्दान् निर्विकारवदनवर्णपूर्वं शुकवदतिशीघ्रं समुच्चार्य तदनन्तरमेव सर्वंदममीनकेतनाज्ञावशीकृतहृदयतया यथैव दर्पितकंदर्पस्य तृष्णातिरेकश्चेतसि संजज्ञे तथैव सद्यस्तदीयप्रणयकल्मषोपालम्भार्थं निगदितानि तानि वचांसि विस्मृत्य सानुरागचेष्टां समाचारितुमकृत्रिममनस्का प्रक्रमे येनैवंमहो मुग्धताविभूषणस्याकृत्रिमप्रकृतिपरिष्करस्य स्नेहस्यैषा नैसर्गिकी रमणीयतमा काप्यविज्ञाता प्रक्रियेति कृत्स्नाभ्यसूयाक्रोधमानादिरूपिशत्रुगणजिष्णुनः सर्वंकषस्य प्रेम्णः शक्ति सुषमां चोपवर्णयति मधुरमधुरस्त्रैणमनोजिघ्रः प्रभूष्णुमनोजन्मानुचरोऽमरुः । अत्रालीकवचनैरिति पदमालीजनैरित्यस्य विशेषणत्वे प्रयुज्येत चेत्तदपि निर्दोषं स्यादपि च पत्युस्तस्य स्खलिते व्यक्ते सति वितथवचनत्वे नाङ्गीकर्तव्यं परन्त्वलीकरूपस्य तदीयापराधस्य निन्दकवचनत्वेऽत्रे च सुस्वादुसंभोगरसपरिपूर्णे शार्दूलविक्रीडितवृत्तसंनद्धपादे रुचिररुचिरे पद्ये स्वाभाविकचेष्टाख्यानात् स्वभावोक्तिरलंकार आविष्क्रियते ।

**दूरादुत्सुकमागते विवलितं संभाषिणि स्फारितं**
**संश्लिष्यत्यरुणं गृहीतवसने कोपाञ्चितभ्रूलतम् ।**
**मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं**
**चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥ ४७ ॥**

हन्त सुदृढबद्धपरस्परहृदयप्रेमाबन्धच्छिदि निस्त्रपस्य प्रणयिनो दुर्विषहे व्यभिचारेऽमर्षमूलकबहुविधभावबिकारचेतोवृत्तिप्रपञ्चनिपुणस्य मूकस्यापि सूक्ष्मैरिङ्गितैरुपालम्भवाग्वज्रदायिनोऽराज्ञोऽपि दण्डचे दण्डपारुष्यनिपातिनः कदाचित् क्रोधाग्निकलुषितस्यापि कदाचित्प्रसादप्रसन्नस्य मनस्विन्याश्चक्षुषोऽद्भुतरसमयी कीदृदुक्षीयं कामरूपता यया कुशीले व्यभिचारिणि कामुके विप्रकर्षाद् दृष्टे सति

कृतप्रणयव्यलीकममुं यथापराधं पुरा दण्डयामीति तदुपसर्पणापेक्षयोत्कण्ठितमात्मानं समया तस्मिनायाते सति दृष्टिप्रसादविश्राणनेन पापिनं त्वां नानुजिघृक्षामीत्यन्यतो विवर्तितं निर्विकारेण हृदयेन सदा त्वयि प्रेमैकपात्रे तत्त्वतो स्निह्यामि यतो मे स्खलितमेकं त्वमुदारचेताः क्षमस्वेति तस्मिन् व्याहरति सति वितथवादिन्! न शुश्रूषे, मेवं तावद् वादीरितीव कोपेन विस्फारितम्, अनुरक्तं मां न जानासीति सरभसमालिङ्गितु तस्मिन् चेष्टमाने सत्यभिमानभूषणां मां मेवं दीधृष इति मनसि कृत्वा रोषानलारुणितं हे कोपने! कथं दुर्धर्षेव संवृत्तासीति तस्मिन् सान्त्वनाय वस्त्राञ्चलं गृह्णति सति किं साधारणीति मत्वा मां प्रतीत्थं समाचरसि, मैवं कृथा दुश्शील! इतीव बहुमानहेतुकमन्युतरङ्गितभ्रूवल्लीभीषणं तथाप्यथोपायान्तराभावेन गत्यन्तरेण विनाकृतत्वाच्च निःशब्दं पादप्रणिपातविधिमात्रतत्परे तस्मिन्निदानीं त्वत्तो लब्धबहुमानास्मीति विवक्षयेव प्रसन्नताद्योतकनयनसलिलपरिपूर्णदृष्टिविक्षेपं तस्याश्चण्ड्याश्चक्षुर्नानाकारेङ्गितव्यञ्जनप्रवीणं संजातमित्यहो महदाश्चर्यम्। रसिकशिरोमणिनामरुणा स्वशब्दमहिम्ना मानिन्या रोषमूलकविशिष्टानुभावप्रपञ्चकुशलस्य कारकरूपस्य चक्षुषः समयोचितकामरूपितावबोधिकास्वनेकक्रियासु वर्णितत्वात् 'सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनां सैव क्रियासु बह्वीषु कारकस्येति दीपकम्' इति काव्यप्रकाशदर्शितलक्षणेन 'स्विद्यति कूणति वेल्लति विचलति निमिषति विलोकयति तिर्यक्, अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने' इत्युदाहृत्या च सुष्ठु संबध्यमानो दीपकालंकारः प्रणयमानकृतविप्रलम्भरसानन्तरजनिष्यमानसंभोगशृङ्गाररसव्यञ्जकंशार्दूलविक्रीडितवृत्तसंयुजं श्लोकमेनं प्रभास्वरदीपवद्दीपयति।

**अङ्गानामतितानवं कुत इदं कस्मादकस्मादिदं**
**मुग्धे पाण्डुकपोलमाननमिति प्राणेश्वरे पृच्छति।**

**तन्व्या सर्वमिदं स्वभावत इति व्याहृत्य पक्ष्मान्तर–**
**व्यापी बाष्पभरस्तया वलितया निःश्वस्य मुक्तोऽन्यतः ॥ ४८॥**

नूनं दुर्निवारनियोगानुष्ठानप्रसङ्गात् कृतकियत्कालक्षेपे विलम्बितगृहागमने जीवितदयिते चिराद्वसतिं प्रत्यागत्याकाण्ड-विपाण्डुरिमविच्छायवदनश्रियमकालदौर्बल्यतनूकृततनूं प्रणयिनीं जायां सखेदं दर्शं दर्शमयं सुकुमारमनोहराणां गात्रलतानामतितनिमा कुतो हेतोरकाण्डे संजात इदं चाकस्मिकवैवर्ण्यसंदिग्धगण्डभित्तिकं वदनारविन्दं कस्मात् कारणादयि वरवर्णिनि ! संवृत्तमिति पर्यनु-युञ्जाने सति मद्धृदयकुसुमशोषिणासहनीयेन विलंबेन चिरायितस्य तव दर्शनौत्सुक्यातिरेकवशादित्थं समजनीति याथातथ्यमात्मलाघव-परिहारार्थमनुक्त्वा सर्वमिदं खलु प्रकृतितः समुत्पन्नमिति प्रोच्यान्यत्र पराङ्मुखीभूतया सुदर्शनया दीर्घं निश्वासं कृत्वा पक्ष्मलनेत्ररोमान्त-रालपरिपूरयिता नयनसलिलौघः प्रवाहित इति सरसं वर्णयन् यथा गीतागोविन्दे 'भवति विलम्बिनि विगलितलज्जा विलपति रोदिति वासकसज्जा' तथेयमपि कार्यान्तरव्यापृत्या जीवितेश्वरे चिरायमाणे तत्समागमोत्कलिकाशतशोशुष्यमाणशिरीषपुष्पाधिकतरमृदुलाङ्ग-वल्ली सौजन्यहृदयसौकुमार्यविभूषणा निर्विचिकित्सपातिव्रत्येन सदैव पतिवर्त्मानुवर्तिनी विजने सनिर्वेदं रोरुद्यमाना विलालप्यमाना तांस्तान् भर्तृसहवासपरमानन्देन विनाकृतान् दिवसान् कृच्छ्रात् कृच्छ्रादत्यवीवहतेत्याशयमप्यभिव्यनक्ति निर्वाच्यशृङ्गारसुधारस-शेवधिरमरुरार्द्रार्द्रहृत्स्थलः। अत्र हि 'आयान्तमालोक्य हरिं प्रतोल्या-माल्याः पुरस्तादनुरागमेका रोमाञ्चकम्पादिभिरुच्यमानं भामा जुगूह प्रणमन्त्यथैनम्' इत्युदाहृतिवद् योषिता तया स्वशरीरकार्श्य-मुखपाण्डुरिमकारणं किंचित् प्रभिन्नं स्वभावत इति व्याजेन गोपितं यतो 'निगूढमपि वस्तुनो रूपं कथमपि प्रभिन्नं केनापि व्यपदेशेन

यदपह्नूयते सा व्याजोक्तिः' इति मम्मटसंपादितलक्षणोपेतो व्याजोक्त्यलंकारो मनस्विन्यास्तस्या अतिश्लाघ्यं सौम्यभावं प्रशंसन् झगिति संभोगशृङ्गारेण परिणमतो दैन्यसंचारिभावयुतविप्रलम्बस्य रसवाहं शार्दूलविक्रीडितवृत्तशालीदं मुक्तकमाधुनिकसमाजवादिमतनिर्णीतयथार्थस्त्रीपुंधर्माविरुद्धान्योन्यप्रणयसुखितयोस्तथा भारतीयधर्मरीतिपारंपर्याविसंवादिस्त्रीपुरुषमार्गानुगामिनोरनयोर्जायापत्योः पुनःसङ्गममभिनन्दतोऽस्मानपि प्रमोदयितुमिव समलंकरोति ।

**पुरस्तन्व्या गोत्रस्खलनचकितोऽहं नतमुखः**
**प्रवृत्तो वैलक्ष्यात्किमपि लिखितुं दैवहतकः ।**
**स्फुटो रेखन्यासः कथमपि स तादृक्परिणतो**
**गता येन व्यक्तिं पुनरवयवैः सैव तरुणी ।। ४९ ।।**

**ततश्चाभिज्ञाय स्फुरदरुणगण्डस्थलरुचा**
**मनस्विन्या रूढप्रणयसहसोद्गद्गदगिरा ।**
**अहो चित्रं चित्रं स्फुटमिति निगद्याश्रुकलुषं**
**रुषा ब्रह्मास्त्रं मे शिरसि निहितो वामचरणः ।।५० युग्मम्।।**

निर्मर्यादरतिकर्मव्यासङ्गव्यभिचारदूषितेनानेकस्त्रीप्रसक्तेन सुरतलम्पटेन केतचिद्यूनात्मनि सुगाढबद्धनिर्विकारानुरागायाः स्वप्रधानकामिन्याः पुरस्तात् पौनःपुनिकाङ्गनान्तराभिगमनपरिशीलितस्मृतिसंस्कारवशादतर्किततन्नामस्खलनप्रतिमालेखनमहापातकं समुत्पाद्य वज्राघातेनेव दक्षिणेतरपाददण्डेनाञ्जसा भृशं दण्डितेन देवानां प्रियेण तेन सख्ये हास्यास्पदं तद्वृत्तान्तं कथापयति हे सखीः ! कादाचित्कप्रणयसंलापप्रसङ्गे ज्येष्ठरमण्याश्चण्डचा

अग्रतो यदृच्छया स्वयमुच्चारितेन प्रतिपक्षकामिनीनामधेयेन भीतभीतो हतभाग्योऽहं यदा वैक्लव्यनम्रीकृताननः सन् प्रतिकूलदौर्भाग्यविजृंभणवशात् त्रपाविलक्षमनस्कत्वाच्च किमपि किमपि लेखितुमारब्धवान् तदा हन्त विस्पष्टाकृतिप्रादुर्भावोऽसौ लेखाव्यापारो गर्ह्यदैवदुर्विपाकेन तादृशीमनिष्टां परिणतिं गतो येन तस्या दुर्निग्रहेर्ष्यास्पदीभूता सवै यूनी पूर्वं श्राव्येण गोत्रस्खलितेन संप्रति तु दृश्यैः सर्वाङ्गैर्व्यक्तमेव भूयोऽपि प्रतिमायामाविष्कारं प्राप्ता ततस्तदनन्तरं प्रतिबिम्बगतां तामेव प्रतिद्वन्द्विकामिनीमभिज्ञाय, अहो विचित्रं प्रतिमाचित्रं खलु विचित्रीयत इति बाष्पाम्बुकलुषितनेत्रपूर्वं विस्पष्टं व्याहृत्य स्फुटपरिस्फुरत्कोपपाटलकपोलभित्तिवर्णया हृदि गाढतरसंदानितस्नेहपाशविदारणैकपदे समुद्भिन्नगद्गदस्खलितवाचा रोषातिशयरक्तीकृतस्फारनेत्रया कोपनया सर्वघ्नब्रह्मायुधरूपी मानसिकप्रातिकूल्यशंसी वामपादो दण्डनीये मम मस्तके रोषेणाभ्यसूयया प्रणयेन च सावहेलं स्थापित इति। 'दिधक्षन् मारुतेर्वालं तमादीप्यदृशाननः, आत्मीयस्य पुरस्यैव सद्यो दहनमन्वभूत्' इत्युदाहृतौ दर्पितेन रावणेनेव दुश्शीलेन कामुकेनाकस्मिकयुवत्यन्तरगोत्रस्खलनतत्प्रतिबिम्बलेखाभ्यां ब्रह्मास्त्रवद्भयानकवामचरणाघातरूपमनिष्टमचिन्तितं फलमवाप्तमिति वामचरणब्रह्मास्त्रनिरूपितरूपकयुतेन विषमालंकारेण निर्भरपरिहासनर्ममूलभूतमिदमीर्ष्यामर्षहेतुकविप्रलम्भकालुष्यकार्दममपि शिखरिणीवृत्तशोभि श्लोकद्वयं प्रेमभङ्गारुणारुणदृष्टिकमलाया असूयादन्दह्यमानायाः कोपभावमभिव्यङ्क्तुं कृतार्थीक्रियत इति मन्यमाना उच्चस्तरां ब्रूमो हे मनस्विन्यः ! पतिव्रताभिरपि युष्माभिर्भर्तारस्ताडनीया दण्डनीयाः परिहर्तव्यास्तदनुष्ठितप्रणयभङ्गे सुव्यवते सतीति।

कठिनहृदये मुञ्च भ्रान्तिं व्यलीककथाश्रितां
पिशुनवचनैर्दुःखं नेतुं न युक्तमिमं जनम् ।
किमिदमथवा सत्यं मुग्धे त्वयाद्य विनिश्चितं
यदभिरुचितं तन्मे कृत्वा प्रिये सुखमास्यताम् ॥ ५१ ॥

अपरवनितासङ्गमरूपकिल्बिषारोपककर्णजापप्रत्ययजनिताभ्यसूयामन्युकृपीटयोनिदग्धप्रायान्तःकरणनिवेशितमानाभिनिवेशांसदैन्य प्रयुज्यमानप्रेमरसार्द्रसामपुरोगानुनयोपायप्राचुर्याद्रावितवज्रसारहृदयकाठिन्यसंसूचितसाग्रहामर्षत्यागेच्छाराहित्यकथितमहिलान्तराभिगमनपातकविश्वासदृढीकृतप्रतिकूलचेतोवृत्तिं दयितां सान्त्वनविधौ व्यपेतप्रत्याशोऽपि यद्भविष्यः कश्चन भूयो भूयः सिसान्त्वयिषुः सखेदमाचष्टेऽकृतापराधमपि त्वय्यतिसान्द्रानुरक्तं मां कथमित्थादवधीरयसि, अयि वज्रलेपायमानकर्कशचित्ते ! मदीयाविद्यमानव्यलीकपिशुनपिशुनजनकर्णजापसंभवां मृषामतिं परिजहीहि त्वद्विषयकपापरहितं विशुद्धाचारमिमं जनं द्विजिह्वानां कर्णजपानां दुर्जनानामस्मत्सुखितसहवासविमुखपैशुन्यवाग्वज्रश्रद्धया दौर्भाग्यपारं प्रापयितुं ते नानुरूपं, हे विमूढे ! यथातत्त्वं ब्रूहि किं मामुद्दिश्येदमनृतमपि सत्यमिति त्वयाधुना व्यवसितं, यद्यदभिप्रेतं तत्तदनुष्ठाय त्वया यथासुखमुष्यतामयि दयिते ! यतोऽहं केवलमेव तव सुखाभिलाषुक इति । इह खल्वीर्ष्यामानजविप्रलम्भशृङ्गाररसोक्षिते हरिणीवृत्तशालिनि पद्ये सहृदयेन नायकेन सदैन्यनिन्दावचोभिर्मन्युज्वरसंतातप्यमानायाः कठिनहृदयविभूषणाया अभ्यसूयिक्या वज्रलेपावलिप्तस्येव सुदृढस्य मानस्य प्रतिषिद्धत्वादाक्षेपालंकार एतच्छ्लोकाभरणत्वे प्रादुर्भूय मनुष्यलोकेऽस्मिन्नतीर्ष्यालवोऽतिकोपनाः पुरुषहृदयशोषण्य ईदृश्यः स्त्रियोऽपि वरीवृत्यन्त इत्यस्मान् सावधानमवबोधयन्निवास्ते ।

**रात्रौ वारिभरालसाम्बुदरवोद्विग्नेन जाताश्रुणा**
**पान्थेनात्मवियोगदुःखपिशुनं गीतं तथोत्कण्ठया ।**
**आस्तां जीवितहारिणः प्रवसनालापस्य संकीर्तनं**
**मानस्यापि जलाञ्जलिः सरभसं लोकेन दत्तो यथा ॥ ५२ ॥**

सूचिभेद्यनीरन्ध्रान्धतमसावगुण्ठितायां दुर्मनायमानप्रवासिनिवहकान्ताविश्लेषव्यथाकृष्णवर्त्मज्वलासंधुक्षणप्रवीणायां निर्विनोदत्वेन प्रहरशतायमानायामतिदुर्विषहायां विभावर्यां कस्मिश्चिज्जनपदे कुक्षिविधृततोयप्राग्भारगरिममन्थरगामिनो जलमुचः क्षणमप्यविस्मरणीयदयितादर्शनोत्कण्ठाजनयिष्णुना प्रियाजनसमागमसमुत्सुकाध्वनीनसार्थप्रेरकेण गम्भीरेण स्तनितध्वनिना संक्षोभितमना अतिविप्रकृष्टदेशस्थत्वात् प्रियतमासंगमे निराशो निर्भरोत्कलिकाशतेन कीलितो हृदयंतपेन विप्रयोगसंतापेन संतप्तो मनःशोषण्या वेदनया शोषितप्रायः स्वान्तव्यापिना निर्वेदनिर्झरेण बहिरप्युदश्रुः कश्चित् पथिको जीवात्मन इवात्मनोऽसहचविरहयातनशंसि प्रमुक्तकण्ठसूचितातिशयशोकं किंचित् सान्द्रौत्सुक्येन तथागासीत्, तावत् सर्वजीवान्तककृतान्तवत्प्राणापहारिणः प्रवासशब्दस्योच्चारणमपि दूरे तिष्ठतु, जीवितनाशकप्रवासकथायाः का कथा यथा क्षणमात्रवियोगादपि भीतत्वात् प्रणयकोपस्य निवापजलाञ्जलिः सर्वेण जनेन ससंभ्रमं व्यतारीति यथानुरूपमुपवर्णयन् शृङ्गारिकविचूडामणिरमरुः प्रवासविप्रलम्भस्यातिदुस्सहत्वं मुहूर्तमात्रवियोगजनयितॄणां प्रणयकलहेर्ष्यामानानामप्यवश्यं परिहेयत्वं चावबोधयति प्रवासिनो वराकस्य कान्ताविरहेणानर्थस्य जनितत्वाद् विषमालंकारकल्पिताभिप्राये विप्रलम्भदुःखोदश्रुणि शार्दूलविक्रीडितवृत्तसंदानितावयवे प्रवासमानयोश्चरमनिवापजलदित्सुनि पद्येऽत्र ।

**स्वं दृष्ट्वा करजक्षतं मधुमदक्षीबाविचार्येष्यया**
**गच्छन्ती क्वनु गच्छसीति विधृता बाला पटान्ते मया।**
**प्रत्यावृत्तमुखी सबाष्पनयना मां मुञ्च मुञ्चेति सा**
**कोपप्रस्फुरिताधरा यदवदत्तत्केन विस्मार्यते ॥ ५३ ॥**

सुरतपर्यवसानसमये मदिरमदिरामादमुषितविवेका क्षीबावस्थानिमग्ना मदविमूढचेताः सा वामलोचना वामोरूः कररुहाग्रेण स्वयं न्यस्तं नखव्रणं वपुषि मे निरीक्ष्य मदमत्तत्वादपरया योषिता कृतमेतदिति मनसि कृत्वा सद्योऽविद्यमानामपि प्रतिपक्षकामिनीं लक्षीकृत्य हृदि समुत्पनीपद्यमानया दुर्भरयाभ्यसूयया सहसोत्थायान्यतो यान्ती कुत्रैवेदानीं प्रणयिनं मां तृणवद् विहाय गच्छसीत्युक्त्वा मया वसनप्रान्ते गृहीता सती मां प्रति वदनेन्दुं निवर्त्य निष्कारणसंतापजनिताश्रुपूर्णनयना दण्डचसीधुमदविचिकित्साजेन क्रोधेन परिकम्पितौष्ठपल्लवा धूर्त ! मां जहिहि जहीहीति यत्सरोषमवादीत्तत् केन प्रकारेण विस्मार्यते, न केनापीति कश्चिद्युवा संप्रति तया विनाकृत्तो विरही तदानीं कामानलोद्दीपिकां कादम्बरीं कामिन्या साकं पायं पायमनवद्यमन्मथकेलिं च समुपभोजं समुपभोजमतिवाहिताः समुदितकुमुदबान्धवकौमुदीस्मेराः सुरतक्षणदास्तास्ता विभावरीः कदाचिच्च मधुमदक्षीवाया इदानीमपि हृदिकृतपुण्यस्मृत्यास्तथाभूताकारणेष्यमानोत्पादितानुभावविशिष्टायास्तस्या निर्विचारं बालिश्यमप्यनुस्मारमनुस्मारं तया सह यथाशीघ्रं पुनः संमिमिलिषुः सखेदं सोत्कण्ठं च समुदीरयति।

यथानुभवं मनसि धृतसंस्कारविशेषोद्बोधहेतोस्तदानींतनसंभोगावसरे कान्ताया असूयामन्युचेष्टितं स्मृतिपदे कान्तेन भूयः समारोपितमिति स्मरणं नामालंकारो दैन्यसंचारिभावान्वितविप्रलम्भ

शृङ्गारव्यञ्जकं पूर्ववच्छार्दुलविक्रीडितवृत्तसज्जितपादमेतन्मुक्तकं हे रसिकाः ! यूयमपि प्राग्वियोगिनो भूत्वा स्वीयायाः दयितायाः कदाचिदप्यस्मार्ष्ट किमिति पिपृच्छिषयेव परिपूणार्थं चरीकर्ति ।

**चपलहृदये किं स्वातन्त्र्यात्तथा गृहमागत-**
**श्चरणपतितः प्रेमार्द्रार्द्रः प्रियः समुपेक्षितः ।**
**तदिदमधुना यावज्जीवं निरस्तसुखोदया**
**रुदितशरणा दुर्जातानां सहस्व रुषां फलम् ॥ ५४ ॥**

नितम्बिन्यन्तरोपगमनरूपेण स्वदौश्चर्येण सुतरां स्फुटितमन्युवेगानलज्वलितान्तःकरणया दुर्भरेर्ष्यारोषवडवानलसंक्षोभितभ्रूकुटितरङ्गभीषणया दुर्गापराह्वचण्डीकल्पया कलहान्तरितया चण्ड्या कण्ठेग्राहं बहिर्निराकृतेन निजदुराचारवशाच्छोचनीयदशान्तरनिपतितेन स्वर्लोकादधस्तादेकपदे निपतितेन क्षीणपुण्येनेव क्षीणभाग्येन केनचिद्रतिलम्पटेन धूर्तेन कान्तासंजिगमिषया सकपटमित्थमित्थं मदर्थे क्रियतामिति प्रार्थिता तत्सखी गेहं गत्वां तां निन्दन्ती समुदीरयति हे विधेयाविधेयविमर्शशून्यमनस्के ! दुर्ललितचाञ्चल्यग्रस्तहृदये ! हा हा कीदृशं चापल्यं त्वयानुष्ठितं येन निरन्तरोदश्रुभ्यां नयनाभ्यां दुर्दिनायसे केन हेतुनापराद्धत्वाद् भृशं विप्रतीसारमनुभवन् प्रातर् वसतिस्थानमागत्य तथा त्वदनुनयाशयेन सविनयदर्शितादरो न पुनस्तेऽपरात्स्यामि, मर्षय मर्षयोदारचित्ते ! मे किल्बिषमेकमिति सम्यक्प्रदर्शितानुशयपूर्वं पादयोः प्रणिपतितः सान्द्रानुरागार्द्रीकृतमनाः सरलसुकुमारो वल्लभः स्वाच्छान्द्यतस्त्वया सावज्ञमवहेलितस्तत् संप्रति प्रियतमनिरसनेनामुक्तिनिरस्तसौभाग्यसमृद्धिस्त्वं दिवानिशं जीवितावसानपर्यन्तं गत्यन्तराभावाच्छरणमिवारण्येरुदितं समाश्रित्य दुर्दान्तानां दुष्टानां स्वकीयक्रोधानां दुष्पचं विपाकं क्षमस्वेति ।

यथैव नागानन्दे 'सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः शरीरकस्यापि कृते मूढाः पापानि कुर्वते' इत्यत्र शरीरकविशेषणत्रयं तस्य संरक्षणायोग्यताभिप्रायोपेतं तथैव श्लोकेऽस्मिन्नपि चपलहृदये निरस्तसुखोदया रुदितशरणेति मानिनीविशेषणत्रयी तस्या आक्षेपोपालम्भलक्षणाभिप्रायगर्भा चरणपतितः प्रेमार्द्रार्द्रे इति दुर्ललितकामुकविशेषणयुग्मं तस्याहेयत्वलालनीयत्वाशयसूचकं दुर्जातानामिति च रुषां विशेषणं तासामनभिलषितत्वाभिप्रायगर्भमिति साभिप्रायविशेषणबाहुल्येन जनितः परिकरालंकारो 'विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः' इति काव्यप्रकाशकारनिर्णीतलक्षणानुरोधी तां मानिनीं माननिर्बन्धं परिहापयितुमिव समलंकरोति प्रणयमानविप्रलम्भाभिनिविष्टं हरिणीवृत्तसूत्रितमिदं मुक्तकम् ।

यद्यपीहातिगर्ह्यधौर्तिकधनस्यानुवारमुत्पथप्रतिपन्नस्य रमणस्यानेकयोषिदभिसरणलक्षणं निन्दनीयं दौश्चर्यं व्यक्तीकृतं तथापि प्रणयदौर्गत्यनिमज्जितात्मा हृद्व्यथापेपीड्यमाना दुर्मर्यादं तं निराकृत्याप्यात्मनः कुलजत्वादनङ्गीकृतगत्यन्तरा सा रमणी किं करोत्वित्थंभूते स्वप्रेमविषये ?

**बाले नाथ विमुञ्च मानिनि रुषं रोषान्मया किं कृतं**
**खेदोऽस्मासु न मेऽपराध्यति भवान्सर्वेऽपराधा मयि ।**
**तत्किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते**
**नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते ॥ ५५ ॥**

आत्मनोऽन्यात्व्यासङ्गव्यञ्जकं संभोगचिह्नं निशाम्य सुतरां कुपितामीर्ष्याकषायितवदनकमलां प्रणयभङ्गखण्डितां भामिनीं प्रसिषादयिषुः कामी व्याहरति हेऽप्रगल्भे बाले ! सा प्रतिवक्ति हे

भर्तः ! ततः सानुनयं स प्रार्थयतेऽयि कोपने ! अमर्षं विजहीहि, ततः सापि निगदति क्रोधात् किं मयानुष्ठितं, न तु किमप्यनभीष्टं वैमुख्यतूष्णींभावनिर्भर्त्सनपादाघातनिरसनादिकमभ्यसूयारोषानुभावाभिनयेन कृतं त्वयि कृतकिल्बिषेऽपि गाढबद्धस्नेहद्रोहिणि सत्यपि, स समुदीरयति नन्वन्तर्निगृहीतकोपया त्वया किमपि मे न कृतमिति हेतोर्मयि परिक्लेशः संजाजायते, पुनः सापि भङ्गिनैपुण्येन ब्रवीति भवान् महृचं नापराध्यति न स्खलति सर्वाणि स्खलितानि मय्येव वर्तन्ते यतो मया दिवानिशं सावधानमनपेक्षितत्वादसंरक्षितत्वादित्थं त्वं निर्मर्यादो भूत्वोन्मार्गगतो मद्धृदयसंतापनः संवृत्तोऽसि, सोऽपि पर्यनुयुङ्क्ते तत्कस्माद्धेतोः कण्ठस्खलितवचनपूर्वं रोदनं कुरुषे, सा प्रतिभाषते कस्य पुरतो मया रुद्यते, संप्रति निर्दयस्य तटस्थस्य तवाग्रतः कथमहं रोदिमि, स आलपति बाढं मत्समक्षमेव रुद्यते, ततः सा पृच्छति दृढमपराप्रसक्तस्य निरनुरागस्य तेऽहं कास्मि ? अपि तु न कापि, स प्रतिवक्ति मे वल्लभासि, ततः सा सावहेलं हस्तं प्रक्षिप्य समुच्चारयति नास्मि नास्मि महिलान्तरसंभोगलोलुपस्योत्पथानुवृत्तिशीलस्यान्याधीनस्य तव प्रिया नास्मीत्यस्मात् कारणात् प्रमुक्तकण्ठं सदैन्यं रोरुद्यते मयेदानीमित्यतिमनोरमा परम्परपर्यनुयोगप्रतिवचनमयी संभाषणपरम्परा संचार्यते प्रणयकलहप्रसङ्गे कामिमिथुनेन।

ईर्ष्यामानजनितविप्रलम्भशृङ्गाररससंसिक्ते मनोहरवाक्यपारस्पर्याह्लादितरसज्ञमनसि शार्दूलविक्रीडितवृत्तयुजि पद्येऽत्र किंचिदाकूतसहितं स्याद्गूढोत्तरमुत्तरमित्यलंकारचन्द्रिकाविहितलक्षणानुगामी प्रचुरनिबद्धप्रश्नोत्तरनैरन्तर्यज उत्तरसंज्ञकालंकारो नितरां प्रतिभासते यथोदाहरणे 'कुशलं तस्या जीवति कुशलं पृच्छामि जीवतीत्युक्तम्, पुनरपि तदेव कथयसि मृतां नु कथयामि या श्वसिति' इतिवदत्रापि।

श्लिष्टः कण्ठे किमिति न मया मूढया प्राणनाथ-
श्चुम्बत्यस्मिन्वदनविनतिः किं कृता किं न दृष्टः।
नोक्तः कस्मादिति नववधूचेष्टितं चिन्तयन्ती
पश्चात्तापं वहति तरुणी प्रेम्णि जाते रसज्ञा ॥ ५६ ॥

विवाहमहामहानन्तरमपरिचितमान्मथलीलाप्रातिकूल्येन सद्यःक्षतयोनिबालास्वाभाविकमौग्ध्येन च स्वादिष्ठमपि पुष्पायुधमदरसास्वादनं यथातृप्ति सम्यग् नास्वादितं मयेति काले गच्छति सति शनैः शनैरुपचेचीयमानरिरंसा पौनःपुनिकसुरतप्राचुर्योपबृंहितप्रेमरसाभिज्ञा निर्भरानुशयमनुभवन्त्यास्ते काचिद्युवतिरिति मन्मथरहस्यकोविदेन सुरसशृङ्गाररसज्ञाग्रेसरेणामरुणा पश्चात्तापपराभूतायास्तस्या दयमानेनेत्थमुच्यते यत् तदानीमप्रागल्भ्यविमूढचेतसा मया किमर्थमनुरागी जीवितेश्वरो न सस्नेहोद्भेदमालिङ्गितः, तस्मिन् मां रागातिशयपूर्वं परिचुम्बति सति कथमिव मया त्रपयेव निजाननं नमितं, किमिति मया सभ्रूविलासं स न निरीक्षितः, कस्माद्धेतोर्वा स मया किंचिदपि नाभिभाषित इति स्वमतिमुग्धनवोढाचेष्टाविशेषमपरिपूर्णमनोरथमनुस्मरन्तीदानीं परिचयं गते शृङ्गारे रुचिररसाभिज्ञा संवृत्ता यूनी सखेदमनुतापमनुबोभवीतीति। यथा कश्चन बालः स्वहस्तगतं मधुरमिष्टान्नं केनापि हेतुना सम्यक्प्रकारेणानास्वाद्य किमिति मधुरिमसुरसं तन्न खादितं मयेति पश्चात्तापं निर्विशति तथेयमपि माधुर्यमयमपि मन्मथसुधासारं यथारुचि न समुपभुज्य प्रबलानुतापतातप्यमानास्त इति पश्चात्तापाक्षेपशंसिनाक्षेपालंकारेणान्योन्यगाढानुरक्तयोस्तरुणदंपत्योर्मञ्जुलसंभोगशृङ्गाररसं मञ्जुमञ्जु प्रवहन् मन्दाक्रान्तपादतरङ्गः श्लोकनदोऽयमात्मनः शोभां दिदृक्षूणां सुरभिं रससारं च लिलिक्षूणां तृप्तये शोशुभ्यत इत्यत्र का मेऽतिशयोक्तिः।

श्रुत्वा नामापि यस्य स्फुटघनपुलकं जायतेऽङ्गं समन्ता–
द्दृष्ट्वा यस्याननेन्दुं भवति वपुरिदं चन्द्रकान्तानुकारि ।
तस्मिन्नागत्य कण्ठग्रहनिकटपदस्थायिनि प्राणनाथे
भग्ना मानस्य चिन्ता भवति मयि पुनर्वज्रमय्यां कथंचित् ।।५७।।

दुर्भरेर्ष्यामूलके प्रणयाकलहेऽपराधिनं भर्तारं प्रत्यभिनयसौष्ठवेन मानप्रपञ्चो व्यक्तं त्वयाविष्करणीय इति प्रियवयस्याभिः प्रेरितापि गृहागतस्य तस्य प्रत्यक्षे खण्डशः खण्डितमानप्रोत्साहा यथोपदेशं तथाकर्तुमशक्ता भूत्वा तदनन्तरं सामर्थ्यविहीनमात्मानं दर्शयन्ती ताभ्यो यथावस्त्वावेदयति यद्यस्य मे प्राणदयितस्याभिधानमाकर्ण्याप्यौत्सुक्यप्रमोदातिशयवशान्मे गात्रं सर्वतो विस्पष्टनीरन्ध्ररोमाञ्चकञ्चुकितं समुत्पनीपद्यते यस्य च वदनेन्दुं निशाम्यापि निर्भरानन्दातिरेकेण प्रोद्भिद्यमानस्वेदसंदोहतया ममेदं शरीरकं विद्रवदिन्दुकान्तोपलानुरोधि संबोभोति तस्मिन् प्राणदयिते गृहमागत्य गण्डपरिचुम्बनकण्ठाश्लेषार्थमेव मत्सान्निध्ये तिष्ठति सति कथंचिद्युष्मदुपदेशद्वारा मनसि कोपदारुण्यस्य समारोपितत्वाद्वज्रप्रख्यायां निष्ठुरायामपि मयि मानचिन्ता खल्वतर्कितमेव तिरोदधातीत्येवं नैसर्गिकसान्द्रप्रणयेन कृत्रिमोऽप्यकृत्रिमोऽपीर्ष्याजनितामर्षः समूलघातं विनाश्यत इति ।

अत्र खलु पूर्वार्धे प्रियतमनामसंकीर्तनश्रवणेनापि दयितायाः रोमहर्षणं संजायते, तदीयमनोद्रावकमुखेन्दुदर्शनेनापि हिमरश्मिकिरणालोकेन चन्द्राकन्त इव तस्या देह. प्रहर्षप्रकर्षेण द्रवीभवति च किमुत तदालिङ्गनादिकेन, किञ्चोत्तरार्धे सर्वंदमेनातिप्रभविष्णुना मन्मथेन पराजित्य क्षुद्रमानकण्टको भीतभीतः कांदिशीको भूत्वा सपद्यदृश्यतां गत इति नायिकायाः स्वाभाविकप्रणयावस्थाया

आननेन्दुवपुश्चन्द्रकान्तपरम्परोपमितिद्वारेण सुष्ठूपवर्णितत्वादत्र स्रग्धरावृत्तेन सह प्रादुर्भवति जात्यलंकारः ।

नन्वेतत्पद्यवाचनानन्तरं वितर्क्यते यदबलानां सरलहृदयानां कृतेन भर्तृस्नेहो वापत्यवात्सल्यं वापरेण केन खल्वतिरिच्यतं इति।

**लाक्षाल्लक्ष्म ललाटपट्टमभितः केयूरमुद्रा गले**
**वक्त्रे कज्जलकालिमा नयनयोस्ताम्बूलरागोऽपरः ।**
**दृष्ट्वा कोपविधायि मण्डनमिदं प्रातश्चिरं प्रेयसो**
**लीलातामरसोदरे मृगदृशः श्वासाः समाप्ति गताः ॥ ५८ ॥**

परिस्फुटितासूयास्पदीभूतायाः प्रतिपक्षकामिन्याः पादयोः प्रणिपातेन नूनं संक्रान्तं चरणालक्तकचिह्नमलिकपट्टिकां परितस्तस्याः परीरम्भेण ननु कण्ठे न्यस्तं तदङ्गदमुद्रणं तस्या नेत्रपरिचुम्बनेन नु मुखे मुद्रितमञ्जनकल्मषं तया विहितेन नेत्रचुम्बनेनोताहोस्विन्नयनयोरङ्कितो रक्तताम्बूलवर्णश्चेत्यादिकं रमणस्य वपुषि संक्रान्तं कोपयिष्णु मन्युज्वलोद्दीपकं लाञ्छनरूपं विभूषणं प्रभातकाले सासूयं निरीक्ष्य निरीक्ष्य स्वविरहज्वरप्रशमनायानीतपूर्वस्य विलाससरसीरुहस्याभ्यन्तरे धैर्येण धैर्येणेर्ष्यामानमन्तर्निगृह्य रोषाग्निप्रादुर्भावप्रच्छादनार्थमेव कमलसौगन्ध्यजिघ्रासाव्यपदेशेन चकितहरिणेक्षणायाः प्रश्वासाः पर्यवसानं प्राप्ता इति स्वाङ्गेषु व्यक्तं लाञ्छितेनान्यासमुपभोगलाञ्छनेन सह प्रातस्तरां स्नानमकृत्वैव निजवसतिं प्रत्यागतस्य वमथुजनकस्यातिनिकृष्टाचारस्य दौर्जन्यदौर्हृदयकलङ्कितस्वरूपस्य निन्दापात्रस्य भर्तुरनिष्टेन संदर्शनेनापि स्थैर्यं समाश्रित्य निजाकारविकृतिगोपनतत्परायाः स्त्रीरत्नभुतायाः सौजन्यसौहार्दसुमण्डितस्वभावभूषायाः प्रशंसाभा-

जनीभूताया भार्याया अत्यन्तश्लाघ्यं धैर्यं सौक्ष्म्येण वर्णयति सहृदयकविशिरोमणिरस्मदीयोऽमरुः ।

परमार्थतोऽत्र शार्दूलविक्रीडितवृत्तकलिपताकारे दुस्सहविप्रलम्भदुःखशंसिनि मुक्तकरत्ने सुगृहीतनाम्न्या प्रेमाबन्धविच्छेदखण्डितया स्वीयेर्ष्यामर्षविकारगुप्तये लीलातामरससोरभाघ्राणक्रियया गहर्यनाम्नः पत्युरतिसन्धानं कृतमिति हेतोः समुत्पन्नो युक्त्यलंकारस्तस्या अतिस्थिरत्वं सुविनीतत्वं च प्रशंसन् यथापापं भृशं सपादाघातं निग्रहीतव्यस्य तस्य दौश्चर्यं निन्दन्निवोत्तमालंकारायमाणः शोभते ।

**लोलैर्लोचनवारिभिः सशपथैः पादप्रणामैः प्रियै–**
**रन्यास्ता विनिवारयन्ति कृपणाः प्राणेश्वरं प्रस्थितम् ।**
**पुण्याहं व्रज मङ्गलं सुदिवसं प्रातः प्रयातस्य ते**
**यत्स्नेहोचितमीहितं प्रिय मया तन्निर्गतः श्रोष्यसि ॥ ५९ ॥**

मनोदाहकप्रवासविप्रयोगासहिष्णुर्मनसि व्यवसितप्राणोत्सर्जनसंकल्पा नूनमद्यप्रभृत्यनुभविष्यमाणविरहव्यथाचिन्तावेगमामन्थ्यमानसुकुमारहृदयपल्लवापि वज्रसारायमानधैर्यावलम्बिता शोकानलदग्धप्रायापि निर्विकाराकृतिर्धैर्ये णस्थाणुः प्रागल्भ्येन प्रौढा काचिन्मत्तका–शिनी जनपदान्तरप्रयाणमार्गेऽधुना प्रस्थास्यमानं सज्जीकृताध्वसंभारं भर्तारं नयनयोरुद्भिद्यमानमपि बाष्पदुर्दिनं कण्ठे निगृह्य धीरमभिभाषते हे प्राणनाथ ! प्रवासविप्रलम्भस्यात्यन्तासहत्वात् संभोगसोख्यमयस्य सहवासस्यातिरुचिकरत्वाच्चोदश्रवो निर्भरविरहवेदनामरीमृद्यमाना हताशाः सत्यो दीना अपरा वराक्यो नेत्राभ्यामधोनिपतनेन शतधा शतधा चूर्णीक्रियमाणैर्लोललोलैरश्रुबिन्दुजालैस्तथा प्रणयिनीं भार्यां मां त्यक्त्वा मा याषीः, यदि गच्छसि पुनर्मां न द्रक्ष्यसीत्यादिशपथवचनसहितैर्हृदयंगमैश्चरण-

प्रणिपातैरन्यैः प्रियैः प्रेमातिशयद्योतकैश्चेष्टितैश्च कार्यान्तरवशात् प्रवासाय देशान्तरं प्रति प्रतिष्ठमानं निजजीविताधारभूतत्वात्तमन्तरेण प्राणधारणस्याचिन्त्यत्वाच्च प्राणेशभूतमतिदयितं भर्तारं विशेषेण निवारयन्ति, यतोऽहं तु न तादृशी ततः सप्रश्रयं स्नेहपूर्वं पतिप्राणाहमाशासेऽद्य पुण्याहं पुण्याहं पुण्याहं भूयात्, कल्याणकारि सुदिवसं तेऽस्तु, हृदयेन मेऽनुरागरञ्जितेन सह व्रज, प्रातस्तरां प्रयाणोद्युक्तस्य ते मङ्गलं भूयात्, भद्राः सन्तु ते पन्थान इति परन्तु हे दयित! यदन्योन्यप्रेमानुरूपं परस्परस्नेहसदृशं किंचिन्मया समीहितं विद्यते तदचिरेणाध्वमार्गस्थस्त्वमाकर्णयिष्यसीति। अचिरभाविदुर्विग्रहविप्रलम्भशृङ्गारशोकरसकार्दमे तथा शार्दूलविक्रीडितवृत्तन्यस्तचरणेऽत्र बाष्पदुर्दिनायमाने श्लोकरत्ने प्रगल्भधीरनायिकाया भविष्यन्मरणव्यञ्जकेन चरमपादेनानुकूलनायकस्य प्रस्थानं निवारितमिति परिपूर्णाशय आक्षेपालंकारः सिद्धनिजकार्यमनोरथः संजाजायते। ननु यत्स्नेहोचितमीहितं प्रिय मया तन्निर्गतः श्रोष्यसीत्यतिकरुणं वचः श्रुत्वा निष्करुणोपि कः स्वीयां जायां तुच्छतृणवत् परित्यज्य जनपदान्तरं गच्छेत्, न कोऽपीति श्रद्दधाना वयं निःसंशयं मन्यामहे स्वभार्यावात्सल्यानुकूलोऽयमपि नायकः प्रयाणाध्यवसायं परित्यक्तवान्, न तु दयितां तामिति।

**लग्ना नांशुकपल्लवे भुजलता न द्वारदेशेऽर्पिता**
**नो वा पादयुगे स्वयं निपतितं तिष्ठेति नोक्तं वचः।**
**काले केवलमम्बुदालिमलिने गन्तुं प्रवृत्तः शठ–**
**स्तन्व्या बाष्पजलौघकल्पितनदीपूरेण रुद्धः प्रियः॥ ६०॥**

दीर्घकालप्रोषितान्नध्वनीनान् स्वस्वकान्तासमागमतृष्णापिपासितान् सत्वरगमनाय नीरन्ध्रयुष्मद्दर्शनौत्सुक्यसहस्रेण युष्मान्

प्रतिपालयन्ति विरहिण्यः प्रिया इतीव गम्भीरस्तनितेन प्रेरयति सान्द्रोत्कण्ठितप्रणयिमिथुननिकरपरस्परसंमेलनमनोरथसाधकेऽतिस्पृहणीये वर्षासमये केनाप्यविज्ञातेन कारणेन बहिर्यियासुं निर्विवेकं निर्विचारं कामिनं केवलं नयनसलिलपूरेण काचित् कामिनी कथंचित् समरौत्सीदिति व्याजिहीर्षया नानाविधसंभोगार्थोपभोगसुखितसहवाससुखीयमानानुरक्तस्त्रीपुंसनिवहदिदृक्षैकतानमना इवास्मदीयरसकविरमरुरुपवर्णयति यत् तन्निर्गमनप्रतिषेधाय स्वबाहुवल्लरी तस्य परिधानाञ्चले साग्रहं नासञ्जि, द्वारकपाटेऽगर्लवत् तया न न्यधायि तदीयचरणयुगले सकरुणं तया भूयो भूयो नो प्राणामि मामेकाकिनीं निरुपमप्रेमपात्रं विहाय क्व यासि निर्दय ! तिष्ठेहेति वचनं वा न तया समुदीरितं किन्तु मनोहरे प्रणयिजनसौभाग्योदयजनयितरि हन्त वारिवाहराजिमलीमसे दुर्दिनायमानेऽप्यन्योन्यासक्तकामिमिथुनसमवायसङ्गमप्रमोदप्रदत्वेन खलु सुदिनायमाने जलदागमे प्रस्थातुं प्रवृत्तो विचारविहीनोऽनर्थकारी रमणो वारिमुग्भिः संपादनीयेनापि नयनसलिलप्रवाहैः विरचितेन जङ्घाद्वयसेन नदीपूरेण केवलं तनुमध्ययापि पीनजघनभारमन्थरया दयितया तया कृच्छ्रात् प्रयाणात् प्रत्यषेधि । खल्विहापि पूर्ववच्छार्दूलविक्रीडितवृत्तकल्पितावयवे स्तोकविप्रलम्भरसस्यंदिनि रुचिररुचिरे मुक्तके कमनीयायां प्रावृषि निर्जिगमिषोर्नायकस्य गमनं दुस्तरेण नदीपूरेणेव बाष्पजलौघेन पतिवत्सलया नायिकया निवारितमित्यौपम्यविशेषोपेत आक्षेपालंकारो रसिकानां मनांसि सरसं हर्तुमाविर्भवति ।

**आस्तां विश्वसनं सखीषु विदिताभिप्रायसारे जने**

**तत्राप्यर्पयितुं दृशं सुरचितां शक्नोमि न व्रीडया ।**

**लोकोऽप्येष परोपहासचतुरः सूक्ष्मेङ्गितज्ञोऽप्यलं**
**मातः कं शरणं व्रजामि हृदये जीर्णोऽनुरागानलः ॥ ६१ ॥**

पातिव्रत्यविहीना जीवद्भर्तृका काचिद्योषिदात्मनो निर्मर्यादेन रागोद्रेकेण स्वकीयात् पत्युरलब्धसंभोगसहवासप्रमोदा सती हृदये विद्यमानं पुरुषान्तरं कामयमानापि प्रतिकूलदैवयोगात् कदाचिदपि संभाव्यलोककिंवदन्तीभीरुस्तत्सङ्गमं मनोराज्यविजृम्भणकल्पमिव मन्यमाना किंकर्तव्यताविमूढचेतास्तत्समागमविषये प्राप्तकालस्य कस्यचिदपि प्रतिविधानोपायस्य प्रेप्सया सुपरिचितां कांचिद्वयोवृद्धामभिभाषते हेऽम्ब ! अभिलषिताय तस्मै जनायाभिसरणादिसमीहितार्थनिवेदनाय किं करिष्यामि, वयस्यासु विश्वासो मे तिष्ठतु, यदि तास्तस्मै प्रेषिताः स्युस्तर्हि कर्हिचिदपि रहस्यभङ्गं कुर्वीरन्निति ता न श्रद्दधामि, सर्वथेयं मयि स्निह्यतीति मदीयचेतोवृत्तीङ्गिताकारसौक्ष्म्यविदि विज्ञातमत्संकल्पतत्त्वे तस्मिन् स्पृहणीये जनेऽपि सलीलं सुकल्पितां दृष्टिं विक्षेप्तुं त्रपया न पारयामि, एष लोकोऽतिमात्रं परोपहासनिपुणः परमाणुसूक्ष्मेङ्गिताकाराशयकोविदः परदूषणापवादनिरतश्च, हृदयदाहकोऽनुरागहुतभुग् जीर्णतां गत इतीत्थंभूतेऽत्र कमहं समाश्रये, किं वा करोमीति । पुरुषान्तरे दृढबद्धैकानुरागा भर्तृमती कुलपांसनीयं दुर्मतिर्निकृष्टस्त्री केवलं लोकापवादभयाद्दूतीप्रेषणमपि दृष्टिविक्षेपमपि स्वयमभिसरणमपि किमपि कर्तुं न शक्नोतीत्यस्या निन्दनीयस्वभावावस्थितिवर्णनोत्थेन जात्यलंकारेण संयोगाभावजनितविप्रलम्भशृङ्गारशंसी शार्दूलविक्रीडितवृत्तसज्जितपादचतुष्टयोऽयं श्लोकः कृतार्थीक्रियमाणो मनुष्यलोके विशाल एवं निन्दास्पदीभूताः परिहरणीयाः स्त्रीधर्मविवर्जिताः स्त्रियोऽपि बाहुल्येन बोभुवतीति कवेरभिप्रायं संसूचयति ।

न जाने संमुखायाते प्रियाणि वदति प्रिये।
सर्वाण्यङ्गानि किं यान्ति नेत्रतां किमु कर्णताम् ॥ ६२ ॥

मे द्वितीयजीवितभूते द्वितीयहृदयभूतेऽत्यन्तस्पृहणीयेऽतिकमनीयेऽपरपुष्पधनुषीव लावण्यौदार्यसौजन्यपौरुषादिप्रशस्यगुणसमुदायसमलंकृतस्वरूपे शाश्वतसुखजनके प्रियतमे मत्प्रत्यक्षमेवागत्य पेशलानि रुचिराणि सुरसस्वादूनि चन्द्रकान्तोपलद्रावककुमुदबान्धववदन्तःकरणद्रावकाणि चाटुवचांसि मधुरं मधुरं व्याहरति सति सेन्द्रियग्रामाणि निखिलानि गात्राणि सर्वात्मना द्रवीभूय तस्यातिप्रियदर्शनतया सावधानदिदृक्षया नेत्रायन्ते किं तदीयचाटुवचसां सुतरां श्रुतिपेयत्वात् किमुत कर्णायन्त इति सम्यग् न वेद्मीति तस्मिन् सुदर्शने यूनि निर्मर्यादमनुरक्ता काचिद्युवतिः प्रियसखीजनस्य पुरस्तात्तत्प्रशंसापूर्वं स्वनिर्भरप्रेमविशेषं प्रीतिप्रोत्फुल्लहृदया तत्स्मरणसुखेषन्मुकुलितनयनोत्पला सती कथापयति। अत्रातिशयोक्तिगर्भः संदेहालंकारः। वृत्तं त्वनुष्टुप्। परिपूर्णसंभोगशृङ्गारः।

अनल्पचिन्ताभरमोहनिश्चला
विलोक्मानैव करोति साध्वसम्।
स्वभावशोभानतिमात्रभूषणा
तनुस्तवेयं बत किं नु सुन्दरि ॥ ६३ ॥

इति प्रिये पृच्छति मानविह्वला
कथंचिदन्तर्धृतबाष्पगद्गदम्।
न किंचिदित्येव जगाद यद्वधूः
कियन्न तेनैव तयास्य वर्णितम् ॥ ६४, युग्मम् ॥

दुर्विषहेर्ष्यामानविप्रलम्भसंतापपरम्पराभूयिष्ठेऽन्तरङ्गबहिरङ्गशोषणशीलत्वेनातिविषमे विरहे निर्विनोदत्वेन दुरतिक्रमे हृदयवेधिविषादशल्यदीर्घीकृते बहुतिथे काले कथंचिद् व्यतीते वनितान्तराभिगमनरूपिणीं दुर्वृत्तिमनुष्ठाय गृहमागत्य मनोव्यथामृदितस्य स्वकीयशरीरस्य दौर्बल्यकार्श्यकारणं सकरुणमिव पृच्छत उत्पथप्रतिपन्नस्यापराधिनो भर्तुरग्रतोऽतिश्लाघ्यसौजन्यसौहृदयस्नेहातिरेकशंगिन्या केवलमेकशब्दमय्यापि शब्दसहस्रातिरिक्तसारया मानजनितावस्थान्तरगोपनार्थमेव यथायथं प्रयुक्तयापि समस्तवस्त्ववबोधिकया व्याजोक्त्या खलु निजाकारं गोपयाञ्चकार निर्भरचिन्तासंतापसंतप्ततनुः काचित् तन्वङ्गी पतिवर्त्मगेत्युपविवर्णयिषुणा परमाणुसूक्ष्मस्त्रैणताकोविदेन रसिकचूडामणिभूतेन कविवरेण सरसं निगद्यतेऽयि वरवर्णिनि ! प्रचुरचिन्तासंतानमूर्च्छानिष्पन्दा दुर्भरवैमनस्यनैरन्तर्यविक्लवा निसर्गसुषमानम्रतामात्रभूषा किन्तु वास्तविकविभूषणविवर्जिता भूरिव्यथातनूकृता निर्बलेयं ते तनुः किं नु खल्वलोकनमात्रेणैव त्रासं मे जनयतीति सविषादं पर्यनुयुञ्जाने पत्यौ तदपपराधमूलकदुर्विगाहमानव्याकुलीकृतचेता हृदयसंतापनचिन्ताग्निदग्धकल्पा सा वधूरभ्यन्तरस्तम्भिताश्रुप्रवाहकलुषितकण्ठस्खलितशब्दोच्चारणपूर्वं गद्गदशब्देनातिकृच्छ्रान् न किंचिद्' इत्येव यत् प्रतिवचनं व्याजहार तेनैवास्मै तया कियन्न वर्णितं, न किंचिदित्यनेन समस्तवृत्तान्त आमूलाद्भूयिष्ठं तस्मै पापिने निवेदयाञ्चक्र इति ।

ननु ह्यत्र 'सखि पश्य गृहारामपरागैरस्मि धूसरा' इत्युदाहरणवन्न किंचिदिति व्यपदेशेन प्रणयमाननिष्पादितस्य प्रशस्यविनयक्षमाविभूषणया कुलजया वध्वा शोचनीयावस्थान्तरस्यापह्नुतत्वाद् व्याजोक्त्यलंकारोऽचिरेण हृद्यतरसंभोगशृङ्गारेण परिणंस्यमानेन दैन्यसंचारिभावपुरस्सरेण विषादशल्यितेन विप्र-

म्भशृङ्गारेण वस्तुतो दुःखमयं वंशस्थविलवृत्तयुतं पद्यमिदं खलु सिद्धस्वप्रयोजनं चरीकर्तीत्यत्र कः संदेहगन्धः ?

**विरहविषमः कामो वामस्तनूकुरुते तनुं**
**दिवसगणनादक्षश्चायं व्यपेतघृणो यमः ।**
**त्वमपि वशगो मानव्याधेर्विचिन्तय नाथ हे**
**किसलयमृदुर्जीवेदेवं कथं प्रमदाजनः ॥ ६५ ॥**

अचिरस्थायिनापि प्रणयकलहजेन विरहेण दूरीकृतजीवितनाथायाः कामुकेन विनाकृतेयमबला निर्बलास्त इति चिक्लिक्षया निराश्रयमात्मानं लक्षीकृत्य निरन्तरमाकनीस्कद्यमानेन सर्वतापेन पुष्पधन्वना निष्ठुरैर्मार्गणैर्मरीमृद्यमानायाः कान्तविरहितेयं निष्प्रयोजनायुरिति सुसूदिषया जीवन्मृतांस्वं बलात्कारेण केशग्राहमाकृष्य सर्वजीवान्तकेन भयानकेन कृतान्तेन प्रतिक्षणं कठोरेण दण्डेनाजंघन्यमानायाः कलहान्तरितायाः कस्याश्चित् प्रमदाया अभिशोचनीयमवस्थान्तरमावेदयितुमागता प्रणयकोपविश्लेषितमिथुनसंघटनानिपुणा श्रेष्ठदूत्यनुरूपा तद्वयस्या विजनस्थं विरहिणं तदीयकामिनं यथावसरयोग्यं सानुनयमवबोधयति हे स्वामिन् ! असहनीयदुर्वारणमनःसंतापसंतानजनकत्वेन क्षणमप्यसहनीयेऽतिस्निग्धकान्तवदनारविन्दावलुलोकिषासमुत्पनीपद्यमानोत्कण्ठाबाहुल्यसमाकुलत्वेन निमेषमात्रमप्यक्षमणीये सुकुमारहृदयपल्लवच्छिदि तीव्रव्यथाभूयिष्ठे वियोगे विषमो निस्त्रिंशः प्रतिकूलचेष्टो मनोमथन इति स्वापराभिधासदृशः कंदर्पो विरहकृशानुपरिक्लिष्टमपि तस्याः शरीरमधिकं कार्श्यं प्रापयति तथा दयाविहीनः सर्वेषां सजीवानामायुर्हरत्वादिह लोकेऽन्तक इत्यपरेण नाम्ना सुविख्यातो निष्करुणोऽसौ यमुनाभ्राता तस्या जीवितावधेरवशिष्टदिवससंख्यानतत्परो वरीवृत्यते, त्वमपि च

तस्या ईर्ष्यामर्षरूपिणो रोगस्य वशंवदः सन् रोगशान्तिसंपादनाय न प्रयियतिषसे तस्मात् सर्वात्मना विचारय कथमसोढव्येन वियोगपरिखेदभारेण मृदितः किसलयवन्मृदुलो योषिज्जन इत्थं ध्रियेतेति

'दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलं, स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत् कालः कृतान्तोऽक्षमी नो सख्यश्चतुराः कथं नु विरहः सोढव्य इत्थं मया' इत्युदाहरणवदत्रापि प्रणयमानजनितस्यापि विरहस्यासोढव्यताद्योतनाय कामयमादीनां परस्पराविरुद्धयुगपद्भावभाजां गुम्फनासमुत्थः समुच्चयालंकारश्चरणनिवेशितहरिणीवृत्तं श्लोकमिमं विमण्डयन् विशेषतो मानजं विप्रलम्भशोकं संवर्धयति। किं चात्रादिमपादेन कामो विरहविषमोऽपि हृदयंगमे सङ्गमेऽत्यन्तानुकूल इति द्वितीयपादेन सर्वास्ववस्थासु कृतान्ताज्ञाया अनतिक्रमणीयत्वादनवद्यसुखमयेषु संभोगेष्वायुरवधिर्यापितव्यो न त्वन्तःकरणमर्मभेदिषु विरहदुःखेष्वित्युत्तरार्धेन त्वां प्राणनाथं वर्जयित्वा न कोऽप्यन्यस्तामुज्जीवयितुं समर्थस्तद्यावत् सा ध्रियते तावद् द्रुततरमागत्य तां वल्लभां समुच्छ्वासयेति पृथक्पृथगवगच्छद्भिरस्माभिरप्याशिष्यते प्रणयकोपवियोजितस्यैतस्य कामिमिथुनस्य शीघ्रसमागमो भवतादिति।

**पादासक्ते सुचिरमिह ते वामता कैव मुग्धे**
**मन्दारम्भे प्रणयिनि जने कोऽपराधोपरोधः।**
**इत्थं तस्याः परिजनकथाकोमले कोपवेगे**
**बाष्पोद्भेदैस्तदनु सहसा न स्थितं न प्रवृत्तम्॥ ६६॥**

प्रेमागसो विदितत्वान्निर्भरेणानुशयेन दृढं पेपीड्यमानमविचारेण प्रणयस्खलितेन यदृच्छया कृतापराधोऽस्मि भूयो न तेऽपरा-

त्स्यामीति त्वदधीनजीविततयेत्थात् पांशुले भूतलेऽप्यात्मानं प्रणिपात्य सुदीर्घकालं सिसान्त्वयिषया त्वदीयचरणावलग्नं कृपणावस्थं सान्द्रानुरक्तं जनं प्रति हे मूढे ! कैव कृपाविहीनाया निष्ठुरान्तःकरणायास्तव प्रतीपगामिता निखिलानां चिन्त्याचिन्त्यानामनुनयोपायानां क्षीणप्रायत्वादधुना मन्दारम्भं स्तोकावशिष्टोपक्रमं कामिनमुद्दिश्यापराधस्य को निरोधस्तत् प्रणयापराध एकलोऽपराधपदे मारोपयेत्येवंप्रकारेण यथावद् व्याहृतेन परिजनस्योपालम्भोपदेशमयेन भाषणेन चिरात्तस्याः कामिन्या रोषावेगे विश्लथीभूते तदनन्तरं नयनसलिलप्रसरैः सपदि न प्रसृतं नाप्रसृतमिति प्रणयकुपितायाः कस्याश्चिद् रमण्याः प्रसादोन्मुखत्वं गच्छन्तं कोपभावनिर्बन्धं व्यक्तीकरोति निसर्गदुर्बोधस्त्रीभावपारदृश्वा कविवरेण्यः ।

इहान्तिमपादे बाष्पोद्भेदैस्तदनु सहसा न स्थितं न प्रवृत्तंमित्यनेन वाक्येन प्रेमापराधसमुत्पादितस्य कोपवेगस्य सम्यग् न प्रशमितत्वाच्चित्तप्रसन्नताद्योतका अश्रूत्पीडा नैकपदे प्रोद्भिन्नाः परन्तु काले कियति गते प्रसृता इति व्यज्यते किञ्चात्र मन्दाक्रान्तावृत्तयुजि विप्रलम्भशृङ्गारमयेऽप्यचिरभाविनं संभोगशृङ्गारं सूचयति श्लोके वामताप्रमुखानां विरुद्धानां पदार्थानामेकत्र युगपदवस्थापितत्वाद्विरोधाभासालंकारः संजायते यस्य लक्षणं तु काव्यादर्शे 'विरुद्धानां पदार्थानां यत्र संसर्गदर्शनम्, विशेषदर्शनायैव स विरोधः स्मृतो यथा' इत्युक्तम् ।

**तथाभूदस्माकं प्रथममविभक्ता तनुरियं**
**ततो न त्वं प्रेयानहमपि हताशा प्रियतमा।**
**इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं**
**मयाप्तं प्राणानां कुलिशकठिनानां फलमिदम् ॥ ६७ ॥**

पुरानवद्येषूपचितरुचिररससारेषु सर्वाकाररोमहर्षणेषु सुरतप्रमोदसुखेष्वतिवाहितानामविस्मरणीयानां वासराणां सोत्सुकमनुस्मृत्यानुस्मृत्य सुचिरसमुपभुक्तसंभोगकात्स्न्यर्तया वा परेद्युरपि ह्योऽप्यद्यापि नूनं श्वोऽप्यपरेद्युरपि सर्वदैव समानरसदायकत्वेन वा प्रतिक्षणक्षीयमाणायुर्वत् प्रेम्णीदानीमपचीयमाने सति निर्वेदोद्रेकमनुभवन्ती विषण्णा काचित् सीमन्तिनी निन्दास्तुतिपूर्वमनुरागविहीनकल्पं भर्तारं ब्रूते यत् प्राग् यदाविच्छेदनीयसुदृढरागरज्जुरज्जुनिबद्धनिर्विकारहृदयौ केवलं स्नेहेनैव स्नेहायैव स्नेह एव प्रणयिनावावामभूव तदावयोर्हृदयमप्येकमविभक्तं तनुरपि चैकैवाभिन्ना खल्वभूतां, परस्परनिर्दोषगुणाकृष्टत्वादन्योन्यानुरागद्रवीभूतसर्वात्मप्रहृष्टत्वाच्च कियत्सुखिनौ तदानीमासिष्वहि ततः- पश्चाद् दौर्भाग्यवशात् प्रेमाबन्धे शनकैः शनकैः शिथिलीभूयमाने त्वं न पुनर्मे प्रियतमः समजनिष्ठाः, अहमपि दुर्गतिनिमग्ना वराकी समजनिषि, संप्रति क्षीणसारेऽनुरागेऽप्यग्निसाक्षिकं विवाहितत्वात्त्वं मां बिभर्षीति भर्ता भवसि, अहमपि त्वया केवलं भ्रिय इति भार्या भवामि, किमन्यत्, वज्रसारायमाणानां प्रणयविवर्जितानां दग्धप्राणानां दुर्विपाकं फलं मया लब्धमिति । अविरहितयोरपि प्रेमरहितयोर्दंपत्योः सहवासस्य नरकसदृशत्वमवबोधयत्यत्र शिखरिणीवृत्तकल्पिताकारे मुक्तके दंपत्योस्तयोः पूर्वमेकता तदनु दयितादयितभावस्ततो जायापतिभाव इति पर्यायेणोक्तत्वादुत्पद्यते पर्यायालङ्कारः ।

ननु कृतपरिणययोरपि समाश्रयभूतप्रेमरहितयोः शुष्कमनसोः स्त्रीपुरुषयोर्निरालम्बो भार्यापतिभावो वा निष्फलः सहवासो वा कथं नाम सोढुं शक्येत ?

**मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते**
**मानं धत्स्व धृतिं बधान ऋजुतां दूरे कुरु प्रेयसि।**
**सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना**
**नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ।।६८।।**

अयि बालेऽप्रगल्भे ! अप्रमादं शृणु प्राप्तकालं मे वचः किमिति त्वया सरलया समस्तः कालो मौग्ध्येनार्जवेनाकुटिलस्वभावेन च व्यतिवाहयितुं सदैवोद्यम्यते, कदाचित् कृतप्रणयापराधे कदाचिदपराधरहितेऽपि दयितजने त्वं क्रोधालुरिवेर्ष्यालुरिव सासूयां रुषं भजस्व प्रागल्भ्यसमन्वितं धैर्यं मनसि समाश्रयस्व कौटिल्यपरिहीणां सरलमतिं सुदूरे जीर्णोपानहमिव परित्यज, किमनया प्रयोजनमित्येवंप्रकारेण मान्मथरहस्यनिष्णातया सर्वस्मिन् कंदर्पविषये प्रौढिकोटिमधिरूढया कयाचित्सख्या निपुणेन मन्त्रिता काचिदतिमुग्धा प्रेयसि गाढबद्धनीरन्ध्रानुरागा दृप्तेन वचसानेन चकितचकिता साध्वसविह्वलवदना तरुणी, हे निर्विचारे नीचैर्ब्रूह्यन्यथा हृदयस्थो मेऽतिदयितो जीवितेशो निश्चितमेवाकर्णयिष्यति ततो ध्रुवं तुभ्यं क्रोत्स्यति हीति ब्रूते स्मेति सर्वपुरुषगणजिष्णोरिव प्रागल्भ्योत्सिक्ताया वयस्यायाश्च मौग्ध्यार्जवसौमनसाधारभूतायाः पतिदेवतायाश्च मध्ये रहसि प्रवृत्तं मनोरमं सुरसं संभाषणं कविपुंगवेनोपवर्ण्यते । इह पूर्वार्धेन बहुविधास्वादजनकव्यञ्जनविवर्जितमनास्वाद्यं विरसमन्नमिव मुग्धतैकरसमयं नीरसप्रायं जीवितं वोढुं न केनापि शक्यं तस्माद्दूरीकृतमौग्ध्यक्षमार्जवया विदितविविधरससुस्वादुप्रणयरहस्यया दुर्वहाभ्यसूयामर्षस्थैर्यजैर्हम्यविचित्रीकृतानुरागचेष्टया त्वया भवितव्यमिति तथोत्तरार्धेन निजप्राणानां तदायत्तत्वात् प्राणनाथं हृदये साक्षात् कृतस्थितिं प्रणयबहुमानाकृष्टा पतिव्रता सर्वात्मनावबोबुध्यत इति संसूचितम् ।

'जितोऽसि मन्द कन्दर्प मच्चित्तेऽस्ति त्रिलोचनः' इत्युदाहरणवदत्रापि चरमपादे हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यतीति हेतुनिरूपणेन नीचैः शंसेति वाक्यार्थस्य समर्थितत्वाद् 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते' इति साहित्यदर्पणकारनिरूपितलक्षणोपेतः काव्यलिङ्गालङ्कारो मुग्धायाः सरलहृदयभूषितायाः योषितो निर्मलानुरागातिशयद्योतकं मधुरिमोद्रेकप्रीणितरसिकनिवहं श्लोकमेनं समलंकुर्वन् शोशुभ्यते। वस्तुतो या भर्तृमत्य आत्मनः पतिः प्राणा इति मन्यन्ते ताः कथं न प्रशस्याः ? ये कलत्रिणो भार्या स्वकीयप्राणवद् दयितेति निर्धारयन्ति ते कथं न श्लाघनीयाः ?

**क्व प्रस्थितासि करभोरु घने निशीथे**
**प्राणाधिको वसति यत्र जनः प्रियो मे।**
**एकाकिनी बत कथं न बिभेषि बाले**
**नन्वस्ति पुङ्खितशरो मदनः सहायः ॥ ६९ ॥**

गुरुनितम्बबिम्बभारालसपादक्षेपामतिबलेन रागरज्जुना निर्भरेण रागोद्रेकेण च समाकृष्यमाणां तमिस्रायां कान्ताभिसरणाय संकेतस्थानं गच्छन्तीमकुतोभयामेकाकिनीं स्वैरिणीं दृष्टिगोचरे कृत्वा वयोवृद्धा काचित् पर्यनुयुङ्क्ते हे रम्भोरु ! सूचिभेद्यान्धतमससान्द्रावगुण्ठिते गम्भीरेऽर्धरात्रे केनावश्यकेन कारणेन कुत्रैवं प्रयासीति, सा स्वैरिणी दुर्वारमदनमदक्षीवा व्यपेतत्रपा सती व्यक्तं प्रतिवक्ति यत्र मे प्राणेभ्योऽधिकोऽमूल्याज्जीवितादपि गरीयान् दयितो जनः प्रतिवसति तत्रैव गच्छामीति, पुनश्च तया जरत्या हा वत्से हाबले! भयानके निशीथेऽसहाया कथं न खलु भीतिमनुभवसीति परिपृष्टे कुतो मे साध्वसं संजायते, श्रूयतां नूनं वरीवृत्यते सहायो मेऽस्त्रैरतीक्ष्णैरपि सहेलं विजितकृत्स्नभुवनः कोदण्डसंनिहितविशिखः

पञ्चशरो मीनकेतन इति सदर्प स्वैरवृत्तिः प्रकृताभिसारिका प्रतिभाषते ।

खल्विह करभोरु ! इति संबोधनशब्देन पीवरस्थूलश्रोणिफलकभारात्तस्या मन्दगामित्वं, घने निशीथ इत्यनेन सान्द्रतमिस्रायास्त्रासजनकत्वं, द्वितीयपादेन कामिकामिन्योः प्रेमातिरेकश्चरमपादेन च गम्भीरायां नीरन्ध्रतमोजालनिरुद्धालोकायामपि निशीथिन्यां भयत्रातरि पुष्पसायके सहचरीभूतेऽकुतोभयाया विदग्धस्वैरिण्याः साध्वसगन्धोऽपि नास्तीत्यभिप्रायः सुविस्पष्टं व्यज्यतेऽत्र च प्रथमतृतीयपादसूचिताभ्यां हेतुमत्प्रश्नाभ्यां साकं द्वितीयतुरीयपादव्यक्तीकृतमभिसरणाभयहेतुद्वयं वर्णितमिति हेतोर्जायते प्रश्नोत्तरालंकारसनाथो हेत्वलंकार एकतः सर्वदमकंदर्पदर्पप्रशंसनायान्यतः प्रस्तुतपद्यमण्डनाय च । वृत्तं तु वसन्ततिलका ।

**लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः**
**कश्चित्केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः ।**
**मुग्धा कुड्मलिताननेन्दु ददती वायुं स्थिता तत्र सा**
**भ्रान्त्या धूर्ततयाथवा नतिमृते तेनानिशं चुम्बिता ॥ ७० ॥**

अमन्दाभ्यसूयास्पदीभूतान्यप्रतीपदर्शिनीसङ्गमावबोधकनिःसंशयदन्तव्रणितौष्ठपुटोऽनेकस्त्रीसंभोगलालसासमतिक्रान्तसदाचारमर्यादो मण्डलीभूतसरीसृपकुटिलकैतवस्वच्छन्दातिसंहितस्वकलत्रः सर्वथा शाठ्यनिरतत्वान् निस्त्रपः सदोच्छृंखलमन्मथयुद्धलम्पटत्वाद् दुर्ललितः कश्चिदुत्पथप्रतिपन्नो रतिशूरोऽन्याङ्गनाभिगमनचिह्नरूपं रदनच्छदव्रणं सासूयं दर्शं दर्शं प्रणयभङ्गखण्डितया स्वकीयया कान्तया कर्कशदण्डाघातार्होऽपि मृदुलेन विलाससरसीरुहेण

सरोषं ताडितः सन् ताडनसमये यदृच्छयान्तःप्रविष्टैस्तत्सरसीरुह-किञ्जल्ककणैः शल्यितदृष्टिरिव नैसर्गिकधौर्त्यवशात् सकपटं सभ्रूभङ्गमुकुलितनेत्रः स्थितस्ततश्चायं मे रमणो लीलारुणकुशेशय-प्रहारेण तत्केसररेणुकदर्थितेक्षणस्तिष्ठतीति चेतोभ्रमेण ससंभ्रमं तदपनयनार्थं सारिकाचञ्चूपुटवत्संकुचितेन मुखाग्रेण तदीयनेत्रयोः पवनमाधमन्ती तत्र स्थिता सा मूढा वरारोहा तेन धूर्तेन योषिद-न्तरतल्पगमनरूपस्वकिल्बिषक्षान्तिप्रार्थनार्थं पादप्रणाममप्यकृत्वैव कपटेनानुवारं परिचुम्बितेति मदनकेलिरसाभिज्ञोऽमरुः सहासं व्याहरति। परमार्थतो दौश्चर्यकैतवाभिनिविष्टेन शठेन दन्तक्षता-धरप्रकटितनिजापराधप्रच्छादनाय लोचनप्रविष्टकिञ्जल्ककणव्य-पदेशेन प्रणयापराधकुपितां कामिनीमतिसंधाय परिचुम्बनेन सुस्वादुमधुरिमोद्रेककमनीयं तस्या अधरामृतसारं यथातृप्ति चोरित-वानिति युक्त्यलंकारः संभोगशृङ्गारद्योतकं शार्दूलविक्रीडितवृत्तसंय-मितचरणं मुक्तकमिदमलंकुर्वन् प्रतिभासते। अत्र तृतीयपादे वायुशब्दोऽपानवायुं स्मारयतीति जुगुप्साव्यञ्जकाश्लीलदोषं निर्दिशन्ति हेमचन्द्रगोविंदप्रमुखाः केचिदालंकारिकास्तथापि शब्ददो-षान्वेषणतत्पराणां काव्यमीमांसकानां पुरतो वस्तुतो निर्दोषं काव्यं क्वापि भवितुं नार्हति।

**स्फुटतु हृदयं कामः कामं करोतु तनुं तनुं**
**न सखि चपलप्रेम्णा कार्यं पुनर्दयितेन मे।**
**इति सरभसं मानावेशादुदीर्य वचस्तया**
**रमणपदवी सारङ्गाक्ष्या निरन्तरमीक्षिता ॥ ७१ ॥**

प्रासङ्गिकमदनकलहावसरे चाटुवचनशतेनापि प्रयत्नतः प्रसि-षादयिषुं प्राणदयितं कोपावेगादपास्य काचिन्मनस्विनी सपदि निर्भरा-

नुशयमरीमृद्यमानान्तःकरणेव करयुगलं भुजान्तराले निधायापसरतस्तस्य सरणीं सशङ्कं सस्पृहमैक्षिष्टेति विवक्षया सर्वाकारहृदयंगममान्मथव्यवहारनिष्णातोऽस्मदीयः कविवर उपवर्णयति हे प्रियसहचरि! प्रणयभंगसमकालमेव हतहृदयं शतधा विशीर्यतां, मकरध्वजः प्रकामतः सुतरां दग्धदेहं कार्श्यं नयतु, पुनश्चञ्चलभङ्गुरानुरागेण प्रेयसा न किंचिदपि प्रयोजनमिति निर्विचारं वचनं रोषवेगवशाद्धठादुच्चार्य हरिणेक्षणया तया निर्गच्छतस्तस्य पन्था अविच्छिन्नपश्चात्तापपूर्वं खल्वजस्रमदर्शीति। अत्र पूर्वार्धेऽसह्यस्नेहभङ्गेन वरं हृदयविदलनं निष्ठुरेण मन्मथेन विप्रलम्भे वरं तनूकृततनुतानवं, न विनश्वरप्रेमशाली मे विश्वासघातकोऽसौ कपटप्रणयीति प्रणयापराधकुपिताया ईर्ष्यामर्षारुणितलोचनायाः कलहान्तरिताया दुर्वारमन्युवेगः प्रदर्शितः किन्तूत्तरार्धे तस्मिन् हृदयवल्लभे क्रोधनिराकृतत्वान्नियाते सति शिरीषकुसुमाधिकमृदुलस्वभावायाश्चिरन्तनप्रबलप्रेमाभिभूतक्षणिककोपायास्तस्याः सपदि संजातः पश्चात्तापातिभारः संसूचित इति सम्यगालोचयद्भिरस्माभिरप्याशिष्यते यन्निष्कारण प्रणयकलहविश्लेषितयोरनयोः परस्परसान्द्रानुरक्तयोः शीघ्रसङ्गमो भवतादिती। प्रणयमानजविप्रलम्भरसमये हरिणीवृत्तविरचिताकृतौ श्लोकेऽत्र हरिणाक्ष्यास्तादवस्थ्यव्यापारख्यापको जात्यलंकार एतत्पद्यशोभासंपादनाय तस्याश्च दुर्भरमानानुशयसंतापद्योतनाय प्रादुर्भवति।

**गाढाश्लेषविशीर्णचन्दनरजःपुञ्जप्रकर्षादियं**
**शय्या संप्रति कोमलाङ्गि परुषेत्यारोप्य मां वक्षसि।**
**गाढौष्ठग्रहपूर्वमाकुलतया पादाग्रसंदंशके-**
**नाकृष्याम्बरमात्मनो यदुचितं धूर्तेन तत्प्रस्तुतम्॥ ७२॥**

प्रौढिं गतेन प्रोत्फुल्लयौवनदर्पेनोत्सिक्ता काचिन्मत्तकाशिनी स्वेन कान्तेन सह यथारुचि निर्विष्टं वल्लभायितसुरतबन्धं विश्वासपात्रभूतायै वयस्यायै रहसि निवेदयति यदयि वामोरु! सुकुमाराङ्गि! पश्य, नीरन्ध्रपरस्परपरिरम्भणेन सर्वतो विस्तीर्णस्य गन्धसारपङ्कोत्करस्यातिशयेन परुषितोऽयं तल्पः कोमलस्य तेऽङ्गस्यायोग्यः संपन्न इति व्यलीकेन पुरुषायितसंभोगसमुपबुभुक्षया मामुरसि समारोप्य सान्द्रसान्द्राधरपरिचुम्बनपूर्वकं भृशमुद्दीपितरागोद्रेकविह्वलतया संदंशकरूपेणाग्रपादद्वयेन मम जघनांशुकमपहृत्य रमणीयेन धूर्तेन यदभिकांक्षितं योग्यं तद्यथातृप्ति प्रारब्धमिति।

इह हि चन्दनपुञ्जप्रकर्षपरुषितशय्याव्याजेन कामिनीं भुजान्तरालेऽधिरोप्य पुरुषायितमकारयद्विविधनिधुवनप्रकारलोलुपः कामुक इत्येतस्माद्धेतोः समुत्पन्नेन युक्तिसंज्ञकेनालंकारविशेषेण वल्लभायितलालसकामुकवत् कृतार्थीक्रियते संपूर्णसंभोगशृङ्गारव्यञ्जकः शार्दूलविक्रीडितवृत्तसंदानितचतुष्पाच्छ्लोकोऽयम्।

उक्तञ्चानङ्गरङ्गे 'जातश्रमं वीक्ष्य पतिं पुरंध्री स्वेच्छात एवाथ रतेष्वतृप्ता। कंदर्पवेगाकुलिता नितान्तं कुर्वीत तुष्टचै पुरुषायितं सा॥ उत्तानसुप्तं दयितं भुजाभ्यामालिङ्गय लिङ्गं विनिवेश्य योनौ भजेन्नितम्बं परिचालयन्ती नारी तदा स्याद्विपरीतबन्धः॥' इति किन्त्वत्र प्रस्तुतकामी नूनमजातश्रमोऽपि विपरीतबन्धलाषुको भूत्वा स्वीयां वल्लभां वल्लभायितमचीकरत्।

**कथमपि कृतप्रत्याख्याने प्रिये स्खलितोत्तरे**
**विरहकृशया कृत्वा व्याजं प्रकल्पितमश्रुतम्।**
**असहनसखीश्रोत्रप्राप्तिप्रमादससंभ्रमं**
**विगलितदृशा शून्ये गेहे समुच्छ्वसितं पुनः॥ ७३॥**

दिवसेभ्यो बहुभ्यः प्रागन्याङ्गनाभिगमनेनानुष्ठितनिर्मर्याद-किल्विषमुन्मार्गप्रतिपत्तिशीलं कैतवनिरतं स्वप्रेयांसं निर्यन्त्रणेर्ष्यामर्षस्फुटितप्रायहृदयतया गेहात् सरोषं निरस्य ततोऽचिरेण पश्चात्ताप संतातप्यमानाया बहुतिथकालावधिकदुर्विषहवियोगमन्युपेपीड्यमानाया निजहृदयस्थापितेन प्रेम्णा स्वयोगक्षेमकल्याणाभिलाषुकाणां बहुमतानां सखीप्रमुखानां ससान्त्वनेनोपदेशेन चानुनीय कथंचिल्लब्धप्रियसमागमायास्तदनन्तरं पुनः कृतापराधेऽपि तस्मिन् सशोकं सनिर्वेदं पूर्वानुभूतविरहतयान्यथा पुनः संभाव्यां विरहापत्तिं दूरीकृतायाः कस्याश्चिद्वरवर्णिन्या औदार्यं क्षान्तिं चोपवर्णयन् कविकुञ्जर आचष्टे यत् प्रतिपक्षकामिनीसङ्गमरूपस्य पातकस्य विदितत्वात् क्रोधातिशयाद् गृहान्निष्कासितपूर्वे ततोऽनेकवासरेभ्यःपश्चात् कथमपि प्रतिनिवृत्य पुनरपि तद्गोत्रस्खलनमिश्रितं श्रुतिदुःखदं प्रतिवचनं दत्त्वा नाहं तथा कृतवानिति कृतप्रत्याख्याने प्रेयसि दीर्घकालविप्रयोगनिर्बलया प्रेयस्या किमपि व्यापारान्तरं व्यपदिश्य वस्तुतस्तेन प्रकल्पितमाकर्णितमप्यनाकर्णिततमिवाभिनीय तदीयगोत्रस्खलनदोषासहिष्णूनां सखीनां श्रवणगोचरे प्रमादेन यदृच्छयापि तद्वचनं निपतेदिति मनसि संदिह्य ससंभ्रमं विगलितबाष्पाम्बुदुर्दिनायमाननेत्रया सर्वतः पश्यन्त्या सखीजनविवर्जिते शून्ये गृहे पुनर्विश्लेषकातरया तया भूयो भूयः समुच्छ्वासोऽकारि। अत्रादिमपादे कृतप्रत्याख्यान इत्यस्य स्थाने कृतप्रत्यापत्ताविति इति पाठान्तरं पुनरन्तिमपादे विगलितदृशेति पदस्य स्थाने विवलितदृशेति पाठान्तरं खलु सुबोधत्वात् समीचीनतरम्। प्रणयकोपसमुत्थविप्रलम्भानन्तरजातसंभोगशृङ्गारलेशव्यञ्जकस्य हरिणीवृत्तान्वितस्यास्य मुक्तकस्य शोभां संपादयति हरिणलोचनायाः कोमलस्वभावख्यापकः स्वभावोक्त्यलंकारः।

आदृष्टिप्रसरात्प्रियस्य पदवीमुद्वीक्ष्य निर्विण्णया
विच्छिन्नेषु पथिष्वहःपरिणतौ ध्वान्ते समुत्सर्पति ।
दत्त्वैकं सशुचा गृहं प्रति पदं पान्थस्त्रियास्मिन् क्षणे
मा भूदागत इत्यमन्दवलितग्रीवं पुनर्वीक्षितम् ॥ ७४ ॥

अहो दुस्सहपीडे सुमनोगुच्छाधिककोमलहृदयदाहुकमन्मथ-मुर्मुरायमाणे प्रवासविप्रलम्भे भर्तृप्रत्यागमनप्रत्याशाकृष्टमनसा निर्भरमनोव्यथामामन्थ्यमानया प्रोषितभर्तृकया नूनं पूर्वेद्युरपि ह्योऽपि पुनरद्यापि रात्रिंदिवा कियच्चिरमनागच्छतोऽपि तस्यागमनं प्रतीक्षितमित्युल्बणोत्कलिकानिकरकीलितमृदुलान्तःकरणायास्तस्या विरहिण्या हृदवस्थान्तराभिव्यञ्जकेऽत्राकृत्रिमानुरागोद्रेकोद्भेदेन हृदिस्पृशि मनोद्रावकत्वेन चानेकशृङ्गारिकाव्यनिबन्धायमाने मुक्तकरत्ने सखेदं सदयं च व्याहरति दुर्मनायमानविरहिजनसुहृद्भूतोऽनिर्वचनीयरसाभिज्ञचूडामणिरस्मत्कविवरो यदद्य मे प्रियतमः किं नु प्रतिनिवर्त्स्यतीत्याशाबन्धेन दुर्वारौत्सुक्यप्राचुर्यवशाद्वासरशतायमानमिवोपलक्षितं कृत्स्नं दिवसं प्रोषितं भर्तारं प्रतीक्ष्य प्रतीक्ष्य नयनगोचरावधिपर्यन्तं तस्य सरणिमुद्ग्रीवया सोत्कण्ठमुद्वीक्ष्योद्वीक्ष्यापि तदनागमनेन सुतरां विषण्णया ततोऽस्तगिरिमधिरूढे सहस्रदीधितौ सायंकालीने तमसि भूतलमवगुण्ठयितुमाविर्भवति सति मार्गेषु सर्वेषु विरलीभूतसंचारेषु शून्यप्रायेषु सत्सु दुर्वहविषादातिभारमृदितया प्रोषितभर्तृकया तयाभिगृहं पदमेकं न्यस्य नन्वेतस्मिन्नेव क्षणे प्राणनाथो मे समायातो न स्यादिति शङ्कयोत्कण्ठया च सहसा ससंभ्रमविवर्तितशिरोधरं भूय उद्वीक्षितं तथाप्यहह तेन नायातमिति । बाढं पथिकवनिताभिशोचयिष्णुप्रवासविप्रलम्भशृंगारावबोधकः शार्दूलविक्रीडितवृत्तप्रकल्पितावयवोऽयं प्रकृष्टश्लोकस्तस्याः स्नेहार्द्रस्वाभाविकचेष्टितवर्णनोत्थेन जात्यलंकारेण परिपूर्णाभिप्राय

संबोभोति । परमार्थतो निरुपमप्रकृतिरामणीयकबाहुल्यातिमनोहरे शश्वन्निर्विकारभ्रातृभावैकीभूतसकलतत्रत्यजानपदातिथेयसौहृदयातिहृद्येऽनिष्टकारिणा पारदेशिकसाम्राज्यवादहतकेनाधुनापि द्विधा विदलितेऽपि तमातिनिकृष्टं साम्राज्यवादं सुदूरं निराकृत्य पुनरेकीभविष्यति मामके कोरियादेशेऽपि पुरा पतिप्राणाः काश्चित् प्रोषितभर्तृकाः प्रतिदिनं प्रतिदिनं प्रियतमपदवीं सोत्सुकं निरीक्ष्य निरीक्ष्य तत्प्रतिनिवर्तनमेव प्रतिपालयन्त्यो बहुतिथे काले गतेऽपि तदनागमनेनातिमन्युस्फुटितहृदयाः पञ्चतां ययुरिति करुणारसमयं शोचनीयं कथानकं संप्रत्यप्यनुशोश्रूयते ।

**आयाते दयिते मनोरथशतैर्नीत्वा कथंचिद्दिनं**
**वैदग्ध्यापगमाज्जडे परिजने दीर्घां कथां कुर्वति ।**
**दष्टास्मीत्यभिधाय सत्वरपदं व्याधूय चीनांशुकं**
**तन्वङ्ग्या रतिकातरेण मनसा नीतः प्रदीपः शमम् ॥ ७५ ॥**

कान्ताविरहितप्रवासिजनदुर्बलमनःशोषणं प्रवासमतिकृच्छ्रात् परिसमाप्य दीर्घकालविश्लेषितत्वाद्दुर्वारणैर्मनोभिलाषनिकुरुम्बैः सह सुचिरप्रतीक्षिते प्रेयसि दूरवर्तिनो जनपदान्तरात् प्रत्यागते सति कृशाङ्गी बहुतिथकालावधिके विप्रयोगे तेन सार्धमनुपभुक्तप्रचुररसं भोगार्थानां केदारे संचितगोधूमराशिवद्धृदये भृशमुपचित्वादमुकममुकं प्रियेण सह यथारुचि निर्वेक्ष्यामि विशेषेण क्षणदायां क्षणदायामद्येति मनोभिलाषनिकरैः कथं कथमपि दिवसमतिवाह्य सायंसमये तदवसरे कार्याकार्यविचारणाराहित्येन मूढ इव पारिपार्श्विकागणे सुचिरात् कान्तेन संगतस्यात्मनः सुरतावकाशमप्यदत्त्वा निरर्थकमायतं कथाजालकं वितन्वाने सति केनापि दुष्टेन कीटेन दष्टास्मीति

सपदि निगद्य त्वरितपादक्षेपपूर्वकं चीनदेशसंभवं क्षौममितस्ततस्तूर्णं व्याधूय सुरतबुभुक्षितेन कालक्षेपासहिष्णुना चेतसा प्रदीपं निरवीवपदिति प्राणदयितसमागमप्रमुदितायास्तस्या वरारोहायाश्चेष्टितं वर्णयति कविशार्दूलोऽमरुः शार्दूलविक्रीडितवृत्तशालिनि मुक्तकेऽत्र।

सुचिरासंभुक्तसुरतपीयूषरसतयातीव बुभुक्षितया तया नायिकयात्मनः संभोगाभिलाषमपह्नुत्य मनोरथसिद्धये दष्टास्मीति व्यलीकेन प्रदीपं निर्वाप्य परिजनातिसंधानं कृतमिति हेतोर्युक्त्यलंकारः प्रवासविप्रलम्भपर्यवसानसमुत्थपरिपूर्णसंभोगशृङ्गाररसाभिव्यञ्जनप्रह्लादितरसिकसमूहमेतद् रुचिरास्वादमयं पद्यं समलंकरोतीति निध्यायतो मे मनसीदं समुत्पद्यते यत् परस्परानुकूलयोः प्रवासेन विप्रयुक्तयोर्जायापत्योः कृते पुनःसमायोगादधिकसुखकरं हृद्यतरमन्यत् किमपि न भवेदिति।

**आलम्ब्याङ्गणवाटिकापरिसरे चूतद्रुमे मञ्जरीं**
**सर्पत्सान्द्रपरागलम्पटरटद्भृङ्गाङ्गनाशोभिनीं**
**मन्ये स्वां तनुमुत्तरीयशकलेनाच्छाद्य बाला स्फुर–**
**त्कण्ठध्वाननिरोधकम्पितकुचश्वासोद्गमा रोदिति ॥ ७६ ॥**

अन्योन्यसंगतकामिमिथुनमदयित्नौ तथा प्रवासविप्रलंभसंतापतातप्यमानविरहिवृन्दमनःशोषणे संभोगसुखितानां कृतेन मधावपि विरहितानां कृते तिग्मे कंदर्पवल्लभे वसन्ते दूरवर्तिनि देशान्तरे स्थितः कश्चिदध्वनीनो दुस्सहवियोगवेदनामरीमृद्यमानो निर्भरमदनज्वरदन्दह्यमानो नूनं दीर्घीकृते विप्रयोगावधौ हृच्छूलायमानदुर्विषहमान्मथव्यथास्फुटितप्रायहृदयां प्राणदयितां भार्यां सशोकंसोत्सुकं चानु स्मारमनुस्मारमुदश्रुनेत्रो वितर्कयति यद्गृहाजिरसमीपवर्तिनः

क्रीडोद्यानस्य पर्यन्तभुवि पुरा कान्तेन सह मनोजन्मलीलाविलसितया मया यथासुखं क्रीडितमिति तांस्तान् सुखितान् दिवसान् पुनर्दुर्लभान् दीर्घनिश्वासपूर्वं स्मरन्ती मन्मथानन्दापराह्वे सहकारमहीरुहे सर्वतो-वितन्वन्नीरन्ध्रसुमनोरजोमधुपरिमललोलुपझंकारसुभगभ्रमरीकदम्ब-सुशोभितां सर्वतापनपुष्पधन्वन एकतमसायकभूतां मञ्जरीम-वलम्ब्य तिष्ठन्ती विरहदुर्बला मे कान्ता स्वीयं देहमुत्तरीयकैक-भागेन संवृत्य परिस्फुरत्कण्ठध्वनिप्रतिरोधवेपितवक्षोरुहनिश्वासो-द्भेदा सती सदैन्यं तूष्णीं रोरुद्यत इत्यहं तर्कयामीति। असोढव्ये प्रणयिनो भर्तुः प्रवासे निरालम्बायाः सुकुमारस्वभावाया विरहिण्या दीनावस्थान्तरवर्णनोत्थेन जात्यलंकारेण विभूषितः शार्दूलविक्रीडित-वृत्तकल्पितचतुष्पादेष श्लोकः सहृदयकाव्यरसिकान्नस्मान् सर्वान् रोदयितुमिव निर्वेदविषादमूलस्य वियोगस्यातिमात्रदुःखावहत्वंमति-दुर्भरत्वं च द्योतयन्नजस्रोदश्रुविरहिमिथुनकरुणप्रवासविप्रलम्भ-शृंगाररसप्रवाहं निरन्तरं वितनुतेतमाम्।

**यास्यामीति समुद्यतस्य गदितं विस्रब्धमाकर्णितं**
**गच्छन्दूरमुपेक्षितो मुहुरसौ व्यावृत्य तिष्ठन्नपि।**
**तच्छून्ये पुनरास्थितास्मि भवने प्राणास्त एते दृढाः**
**सख्यस्तिष्ठत जीवितव्यसनिनी दम्भादहं रोदिमि ॥ ७७ ॥**

हे प्रियवयस्याः! तदानीं कार्यान्तरवशात् प्रवासाय प्रण-यिनीं भार्यां मां परित्यज्य सुदूरसंस्थं जनपदान्तरं प्रति प्रस्थातुं प्रवृत्तस्य यस्य साधयिष्याम्यधुना पुनर्दर्शनायेति बाष्पाकुलकण्ठं व्याहृतं हृदयवेधि कुलिशाघातप्रख्यं वचनं निर्विकाराकारयापि दुस्सहविरहवडवानलसंक्षोभितान्तरङ्गसमुद्रया मया तत्प्रयाणविघ्न-

निवारणायैव विश्रब्धं धैर्येण धैर्येणाश्रावि स मे प्राणनाथोऽध्व मार्गस्थोऽग्रे गच्छन् मम दुस्त्याज्यत्वात् पृष्ठत आकृष्यमाणो भूयो भूयः सखेदं परिवृत्य तिष्ठन्नपि जीवितनिरपेक्षया मया तदीयप्रस्थान-सिद्धयेऽन्यथा सोऽयं देशान्तरेऽनुस्थातव्यस्य निजकार्यस्य गौरवमपि जीर्णपादुकामिव परिहाय नूनं प्रयाणाद्विरंस्यतीति मत्वा दूरमुपैक्षि, ततस्तस्य गमनानन्तरं वज्रसारायमाणातिकठोरचित्तवृत्तिरहं नरक-कल्पे विरहे मानसिकयातनामनुभवन्ती प्राणत्यागमप्यकृत्वा यत्र निकतने पुरानवद्येषु संभोगसुखेषु प्रेम्णा प्रणयिना तेन च मया सुतरां सुखितया यथातृप्ति यथासुखमुषितं तत्रैव तस्याभावाच्छून्ये सांप्रतमपि जिजीविषया जीवितद्वितीयाहमवस्थितास्मि, हन्त ते वज्रलेपवन्निष्ठुराः शिलोच्चयवत् स्थायुका एते प्राणा इदानीमपि मां न परिजहाति येन हे सख्यः! मदर्थे निश्चिन्ता आद्ध्वं किन्त्वतिदृढजीविताभिनिविष्टा सती व्यलीकेनाहमुदश्रुः प्रलपामीति हृच्छूलायमानविप्रलम्भासहिष्णुः काचित् प्रोषितभर्तृका दग्धप्राणान् निन्दन्ती स्वप्रियसखीरभिदधाति।

अत्र प्रवासविप्रलम्भविषण्णनायिकाबाष्पपूरोक्षितेऽङ्गीकृत-शार्दूलविक्रीडितवृत्ते पद्ये जात्यलंकारः प्रयुक्तः।

**अनालोच्य प्रेम्णः परिणतिमनादृत्य सुहृद–**
**स्त्वयाकाण्डे मानः किमिति सरले संप्रति कृतः।**
**समाकृष्टा ह्येते प्रलयदहनोद्भासुरशिखाः**
**स्वहस्तेनाङ्गारास्तदलमधुनारण्यरुदितैः ॥ ७८ ॥**

अनुष्ठितापरवनितासमागमापराधं धूर्तकीटमनभीष्टसान्निध्यं स्वरमणं कोपस्फोटनेन बहिर्निरस्याजस्रमालम्बितमाननिर्बंधां रमणीं

मानाभिनिवेशं परित्याजयितुं सोपालम्भमवबोधयत्येकतमा सखी तेन धूर्तहतकेन पुनःसंजिगमिषया प्रार्थिता हे कुटिलधूर्तस्वभावानभिज्ञे ! अजिह्मनस्के ! निजकान्तपरित्यागेनावश्यं जनिष्यमाणं विपन्नस्यानुरागद्रुमस्य दुर्विपाकं मन्युवेगादविचार्य मादृक्षं प्राप्तकालोपदेशदानक्षमं विश्वसनीयं सखीगणमप्युपेक्ष्य कथं नामेदानीमकाले तं प्रति त्वया प्रणयामर्षो निष्पादितो हा पश्य यस्मादतिभीषणकल्पान्तकालीनसमुज्ज्वलितज्वलनज्वालाशालिन एतेऽलाताः स्वतनुदाहनाय स्वकीयेन करेण मोहात् समाकृष्टास्तस्मात् सर्वं विध्वस्तं, विफलैररण्यरुदितैः कृतं, तैः किं प्रयोजनं प्रेम्णि सांप्रतं विनष्टे कामुके च दूरीकृत इति। अत्रोत्तरार्धे व्यपेतसौभाग्यया क्रोधानलधूमविमोहितचैतन्यया त्वया स्वकान्तनिरासेन महती विपदात्मन उपरि समाहूता तथाप्यस्त्येक एवोपायो विपन्निरसने यदि दिष्टया स त्वया सह यथापूर्वं संगच्छेतेति समागमाभिप्राय उपांशु निर्दिष्टः किञ्चात्र कलहान्तरितायाः कामिविरहमूलभूतस्यानर्थप्रदस्य मानस्य प्रतिषेधात् प्रादुर्भवत्याक्षेपालंकारः प्रणयकलहजनितविप्रलम्भशृङ्गारकर्दमकलुषितं शिखरिणीवृत्तशालिनमिमं श्लोकं मण्डयितुम्। पुनरत्र निरूपितकामुकसजातीयाः शठाधमा मनुष्यलोकेऽधुनापि भूयिष्ठं जीवन्तः स्त्रीरत्नानि धौर्त्येन व्यलीकेन दुश्चरितेन च ध्रुवं कदर्थयन्तितरामित्यहो खेदो महान्।

**कपोले पत्राली करतलनिरोधेन मृदिता**
**निपीतो निःश्वासैरयममृतहृद्योऽधररसः।**
**मुहुः कण्ठे लग्नस्तरलयति बाष्पः स्तनतटं**
**प्रियो मन्युर्जातस्तव निरनुरोधे न तु वयम्॥ ७९॥**

प्रणयकुपितां चाटूक्तिसान्त्वनचरणप्रणिपातैरप्यप्रसन्नामति दृढामर्षाग्रहग्रस्तां निजदयितां निशाम्य निशाम्य मन्युस्ते हृदयवल्लभः संवृत्तोऽहं तूदासीन इति सोल्लुंठवचसा कश्चिद् विहितप्रणयापराधः कामी ब्रवीति हेऽवधीरितानुनये ! अप्रसन्नचित्ते ! विविधप्रसादनविधिभिरप्यपरित्यक्तकोपया गृहीततूष्णींभावया हस्तस्थापितकपोलया त्वयाजस्रपाणितलसंरोधेन गण्डभित्तौ पत्रलेखामण्डनं मृष्टं, न तु मदीयाननिपीडनेन, स्वादिष्ठ पीयूषसारायमाणोऽत्यन्तरुचिरोऽयं तेऽधररसो

दुर्भरेर्ष्यारोषव्यञ्जकैर्दीर्घनिश्वासैर्निपीतो, न तु परिचुम्बनेन मया, शिरोधरायामवसक्तोऽन्तर्निरुद्धक्रोधावेगजो नयनसलिलोत्पीडो मनोहरं वक्षोरुहस्थलं वेपयति न तु क्षीणभाग्योऽहम्, हे कठिनहृदये ! श्रूयतामित्थं कोपविषादवैमनस्यभूयिष्ठो मन्युस्तव वल्लभः संजातो न तु तटस्था अकिञ्चित्करा वयमिति बाह्यौदासीन्याभिव्यञ्जकमप्यान्तरानुरागबाहुल्यावबोधकं हृदयंगमं निगदितं श्रावं श्रावं सावेगोद्भिन्नबाष्पोत्पीडैः प्रसत्तिसूचकैः सह मानिन्या तया मानो नूनं परित्यक्तो भवेदिति प्रस्तुतदंपतिसुखैषिणस्तर्कयामो वयम् । नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखमितिवदथवा, हालाहलो नैव विषं विषं रमेत्यादिवत् प्रियो मन्युर्जातस्तव न तु वयमित्यत्रापि प्रिये प्रियत्वनिह्नवेन मन्यौ तदारोपितत्वादपह्नुतिर्नामालंकारोऽचिरसंभोगपर्यवसायिमानजनितविप्रलम्भशृंगाररसनिस्यन्दिनं शिखरिणीवृत्तशोभिनमेनं श्लोकं समलंकरोति कथंचिदचिरेण मन्यौ प्रशान्ति गते हृद्यतरेण सौख्यकरेण संभोगशृंगारसुधासारेण मिथुनं प्रमोदताम्, योऽप्रियः संजातः स पुनः प्रियो भवतादित्याशासान इव ।

**शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनै-**
**र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।**
**विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं**
**लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥८०॥**

प्रणयिभर्तृद्वितीयमात्मानं वर्जयित्वा शून्यीभूतं विविक्तं रागोद्दीपनक्षमं लीलागारं कोऽप्यस्मद्रहस्यं निरीक्षेतेति कातरस्त्रीस्वभावशंसिन्या शङ्कया विशेषतः समीक्ष्येषच्छनैः शयनीयकात् पूर्वकायमुत्थाप्य किन्वयं मे प्राणदयितो व्यलीकनिद्रामुकुलितनयन उताहोस्विद्वस्तुतो निद्रित इति निद्राव्यपदेशसंदेहदूरीकरणाय मृषास्वापनिमग्नस्य भर्तुराननं दीर्घकालं सान्द्रस्नेहपूर्वं विलोक्य निर्भरप्रेमौत्सुक्योद्रेकपारवश्यान्नेत्रयोर्भालपट्टे कपालयोरधरे वीतसाध्वसं परिचुम्ब्यामृतरसायमानपरिचुम्बनप्रहृष्टरोमाञ्चां कपोलभित्तिं निशाम्य त्रपाविह्वलाधोमुखी वैक्लव्यातिशयारुणवदनेन्दुर्मुग्धा प्रणयबहुमानास्पदीभूता भार्या संधुक्षितरागज्वलनेन प्रहर्षस्मितिप्रोत्फुल्लदृष्टिना स्मयमानेन दयितेन चिरं चुम्बितेति रसिकानामस्माकं मनःस्वपि परस्परानुकूलयोर्दृढतरबद्धप्रणयपाशयोस्तरुणदंपत्योरतिमधुरेण हृदिस्पृशा संभोगविलासेन रुचिरं रतिरसं परिपूरयन् सरसं सहर्षं च व्याहरति सहृदयरसिकचूडामणिः कविकुञ्जरः ।

अहो कियद्दूरमपजेह्रीयते चेतांसि सुरसगुणवत्काव्यरञ्जितहृदयानाममूल्यकाव्यपीयूषसाराभिलाषुकाणां सर्वजनमनश्चमत्कारि चित्रीयमानमेतद् रुचिरमान्मथविलासमयचित्रलेखावच्चक्षुष्यं परिपूर्णरागप्रवाहिगीतकवच्छ्रुतिमनोहरं सम्यगुररीकृतशार्दूलविक्रीडितवृत्तशोभि निरुपममुक्तकरत्नं यत्र निर्वाच्योभयानुरागैकीभूत-

शरीरस्य विविक्ते केलिसदने रमणीयरिरंसाप्रोत्साहितस्य विलासिमिथुनस्य निःसारे जीवलोकेऽपि जीवितसारभूत इव निरूपितोऽतिरुचिकरोऽत्यन्तहृद्यः सुरतमहामहो व्रीडाजुगुप्सादिद्योतकाश्लीलदोषरहितैः सार्थकैः सगुणैर्मधुरिमसमन्वितैः शब्दैः सुष्ठूपवर्णितो यच्चानलंकृत्यपि सद्गुणप्रकृष्टरससमुपेतत्वात् काव्यमीमांसकैर्निरवद्योत्तमकाव्यपदे समारोप्यते ।

**लोलभ्रूलतया विपक्षदिगुपन्यासेऽवधूतं शिर–**
**स्तद्वृत्तान्तविदीक्षणे कृतनमस्कारो विलक्षः स्थितः ।**
**कोपात्ताम्रकपोलभित्तिनि मुखे दृष्ट्या गत पादयो–**
**रुत्सृष्टो गुरुसंनिधावपि विधिर्द्वाभ्यां न कालोचितः ॥८१॥**

दुर्ललितस्त्वं संभोगलोलुपया मदीर्ष्यापात्रीभूतायास्तस्या वसतिगृहं गाढानुरक्तां मामवधीर्य गतवानिति सासूयं चञ्चद्भ्रूवल्लर्या प्रतिपक्षकामिनीवेश्मदिग्भागनिर्देशे कोपनया वध्वा कृते सति त्वदधीनो नाहं तत्रायासिषमिति स्वदौश्चर्यापह्नवाय शीर्षमितस्ततस्तेन धूर्तकीटेन भर्त्रा कम्पितम्, असौ ते दुश्चरितं वेत्ति हे वञ्चक ! मां मा खलु वञ्चयस्वेति सूक्ष्मेणेङ्गितेन तद्विपक्षरमणीसङ्गमवृत्तान्ताभिज्ञसख्यादिजनमुखनिरीक्षणे कोपारुणितनेत्रया तया विहिते सति सलज्जमनुष्ठितशिरःप्रणामः सन् वैलक्ष्याकुल एष तस्थिवान्, ततो व्यलीकतत्परोऽयमुत्तमाङ्गप्रणामेन समुद्घोषितस्वापराधो न मर्षयितव्यो रतितस्कर इतीर्ष्यालोस्तस्या वदने दुर्दम्याभ्यसूयारोषानलारुणीकृतगण्डस्थले सति गुरुजनसान्निध्ये चरणप्रणिपातस्यायोग्यतया दृष्टिक्षेपेणैवैष धूर्तस्तस्या पादप्रणाममकार्षीदित्थंप्रकारेण श्वशुरप्रमुखगुरुजनसमक्षमपीर्ष्यामानप्रकाशनानुनयचेष्टात्मकोऽपरा-

धसमयोचितोऽपि गुरुजनसामीप्येऽप्राप्तकालो गर्हणीयः प्रक्रमो द्वाभ्यां जायापतिभ्यां नात्याजीति प्राक् प्रतिषिद्धप्रतिकूलकामिनी-गृहगमनस्यापि सहेलमतिक्रान्ततत्प्रतिषेधस्य सुरतलम्पटस्य कस्यचित् पत्युः प्रणयकुपितस्य च तदीयकलत्रस्य परिहसनीयं निःशब्दचेष्टितं सर्वावस्थाप्रतिपन्नप्रणयव्यापारकोविदेन सम्यगुप-वर्ण्यतेऽस्मदीयकविशार्दूलेन।

अत्र खलु मा स्म तत्र भूयो गम इति मया वारंवारं निषिद्धोऽपि त्वं सपत्नकामिनीसदनं गत्वा तया सह मदनललितं निर्वर्तितवानिति भ्रूलतेङ्गितेन तयोद्घोषिते तदपराधेऽपि मृषा-वादिना तेन धूर्ताधमेन शिरःकम्पनेन प्रत्याख्यातं ततः पश्य हेऽनृतक ! अत्र साक्षिजनो वर्तत इति दृष्टिविक्षेपेण सूचिते तस्मिन् निजपापस्य सुविदितत्वाद् गत्यन्तराभावेन नमस्कारं विधाय तेनानुनिनीषितमेवमादरणीयगुरुजनसकाशेऽपीदृशो व्यापारस्ताभ्या-मनुष्ठितः किञ्च यदि गुरुजनस्य सान्निध्यं नाभविष्यत् पादाघातताडनतर्जनोत्क्रोशप्रायो महान् विप्लवः समजनिष्यतेति विदग्धधूर्तप्रगल्भमानिन्योर्नैसर्गिकचेष्टावर्णनोत्थेन जात्यलंकारेण विभूष्यतेऽयं शार्दूलविक्रीडितवृत्तशोभी मानकृतविप्रलम्भशृङ्गारा-भिव्यञ्जकः श्लोकः।

**जाता नोत्कलिका स्तनौ न लुलितौ गात्रं न रोमाञ्चित**
**वक्त्रं स्वेदकणान्वितं न सहसा यावच्छठेनामुना।**
**दृष्टनैव मनो हृतं धृतिमुषा प्राणेश्वरेणाद्य मे**
**तत्केनात्र निरूप्यमाणनिपुणो मानः समाधीयताम् ॥ ८२ ॥**

विहितेनसि भर्तरि दूरीकृतमौग्ध्यया यथाबलमागृहीतधैर्यया त्वया प्रणयकोपः कर्तव्योऽन्यथा पौनःपुन्येनासौ योषिदन्तराभिगमनेन

प्रणयभङ्गं कृत्वा यावज्जीवं त्वन्मनःसंतापनो भविष्यतीत्याद्युपदेश-वचसा विश्वसनीयाभिः प्रौढसखीभिरवबोधितापि काचिन्मुग्धा कृता-पराधे प्राणनाथे दृष्टमात्र एव दृढीकृतो मानोऽवश्यंभाविना मनो-द्रावेण सह युगपत् कांदिशीको भूत्वा कुतोऽप्यदृश्यतां गत इति तासां पुरतोऽभिधत्ते हे सख्यः ! शृणुत तावन्निर्भरानुरागादौत्सुक्यं मनसि न समुत्पन्नं प्रमोदातिभाराद्वक्षोरुहौ न वेपथुमन्तौ प्रहर्षातिशायदङ्गं न पुलकितं रागोद्रेकाद् वा वदनं न स्विन्नं यावदमुना धूर्तेन धैर्यचुरेणा-वलोकितेनैव जीवितेश्वरेणैकपदे मे मनो मुषितमद्य तस्मात् पुनरत्रो-पदेष्टुमर्हन्ति भवत्यः केन विधिना केनोपायेन वा निपुणं निरूप्य-माणो निपुणेन समीक्ष्यमाणो मानो दृढीकृत्य संस्थाप्यतामिति। तावद्दूर आस्तां मानवार्ता यावल्लोचनगोचरे पतितमात्रेणैव मत्स्थैर्यतस्करेण हृदयं मे चोरितमस्ति तदसौ शठः प्रणयकुपितां मां प्रसादयितुं समीपमागच्छेच्चेत् तर्हि सर्वमत्यद्भुतं संजायेत, स्नेहाभिव्यञ्जक उत्कण्ठातिरेकः समुत्पद्येत, तत्सन्निधानजनिता-नन्देन कुचौ ससंभ्रमं वेपेयातां प्रह्लादातिशयेन सुतरां तनू रोमा-ञ्चिता भवेत्, मम मुखं च निरन्तरमेव रागस्फुटनेन प्रस्वेदेतेति निसर्गसरलयापराधिन्यपि वल्लभे नीरंध्रानुरक्तया नववध्वा सर्वंक-षेण प्रेमबलेन समूलघातं विनाशितस्य मानस्य शोचनीया दशा शार्दूलविक्रीडितवृत्तकल्पितपादेऽचिरेणैव मनोरमसंभोगशृङ्गारेण परिणंस्यमानं विप्रलम्भशृंगारं द्योतयति जात्यलंकारविभूषितेऽत्र मुक्तके यथावस्तु निर्व्याजं निर्दिश्यते।

**दृष्टः कातरनेत्रया चिरतरं बद्ध्वाञ्जलिं याचितः**

**पश्चादंशुकपल्लवेन विधृतो निर्व्याजमालिङ्गितः।**

**इत्याक्षिप्य यदा समस्तमघृणो गन्तुं प्रवृत्तः शठः**
**पूर्वं प्राणपरिग्रहो दयितया मुक्तस्ततो वल्लभः ॥ ८३ ॥**

यादृच्छिके मदनकलहप्रसंगे रोषितस्यात एवात्मानं परित्यज्यान्यतो यियासोः प्रणयिनो गमनं यथाशक्ति निवारयितुं प्रयतमानायाः कस्याश्चित् कामिन्या अनुकम्पनीयं निर्वेदमुपविवर्णयिषुणा कृपालुनातिमृदुस्वभावेन दुर्बोधस्त्रीपुरुषचेतोवृत्तिकोविदेनातिसूक्ष्ममन्मथमर्मविदा शृंगारिकविसार्थाग्रेसरेणामरुणा व्याह्रियते यद् दैन्यविह्वलया चकितचकितहरिणलोचनया प्रणयिन्या प्राणदयितः सानुनयं सुचिरं वीक्षितस्तया प्राञ्जल्या त्वदधीनां त्वदेकतानमनसं त्वन्निष्ठप्रेमसर्वस्वां मां प्रति निष्कारणं कोपं विहाय पुनरानुकूल्यं भजस्वेति सनिर्बन्धं सविनयं च प्रार्थितस्तदनन्तरं क्व यासि मम दीनप्रार्थनां सावज्ञमुपेक्ष्येति परिधानवस्त्रदशायां गृहीतस्ततोऽनुरागप्रकर्षद्योतनाय तन्निर्गमननिषेधाय च तया निर्व्यपदेशं परिरब्धस्तथापि सर्वमेतदनभीष्टमिव प्रक्षिप्य सावहेलमनादृत्य निष्करुणः कर्कशहृदयो निर्यातुं प्रक्रान्तस्ततो विरहशोकसागरनिमग्नया निराशया तया दयितयादौ जीविताशा विसृष्टा पश्चाद् दयितो विमुक्त इति।

परमार्थः: पूर्वार्धेऽत्र प्रेमातिशयपूर्वकसुखितसहवासादिकं निखिलं निरस्य यत्र कुत्रापि निर्यातुमुद्यते निष्ठुरे कामुके सति हृदयमर्मच्छिद्वियोगासहिष्णुतया तदीयनिर्गमनव्यवसायाद् भीतभीतायाः प्राणसमानप्रणयैकाग्रमनस्कायाः स्त्रीजातिललामभूताया इव सौजन्यनिधेः प्रणयिन्याः साध्वसकातर्यदैन्यातिरेकः सुष्ठु द्योतितश्चरमपादे च पूर्वं प्राणपरिग्रहो दयितया मुक्तस्ततो वल्लभ इत्यनेन हृदिस्पृशा सहृदयजनाश्रूत्पीडजनकेन प्रकृष्टवाक्येन तस्या स्वकीयप्राणाधिक दयिते दयितेऽतिदृढाबद्धस्नेहपाशोऽभिव्यक्त

इत्यवगम्यतेऽत्र च 'उत्कण्ठयति मेघानां माला वर्गं कलापिनां, यूनां चोत्कण्ठयत्यद्य मानसं मकरध्वजः' इत्युदाहरणवदनेकेषां क्रियापदानामावृत्तिगुम्फनया निष्पादितेन दीपकालंकारेण निषेधात्मकेन चाक्षेपालंकारेण विप्रलम्भबाष्पाम्बुसंसिक्तं शार्दूलविक्रीडितवृत्तान्वितं पद्यमिदं कृतार्थीक्रियत इति समर्थयद्भिरस्माभिः पुनर्विचार्यते यन्मनुष्यलोकललामभूतानां स्त्रीरत्नानां स्नेहः खलु समस्तेभ्यो जीवितादिभ्यः पदार्थेभ्योऽतिरिच्यत इति।

**तप्ते महाविरहवह्निशिखावलीभि–**
**रापाण्डुरस्तनतटे हृदये प्रियायाः।**
**मन्मार्गवीक्षणनिवेशितदीनदृष्टे–**
**र्नूनं छमच्छमिति बाष्पकणाः पतन्ति॥ ८४॥**

हन्त दुर्निवारमानसिकव्यथामरीमृद्यमानमालतीपुष्पाधिककोमलतनुलता जीवितदयिते मयि दृष्टिश्रवणगोचरातीतेऽजस्रनिपतदश्रुनिर्झरसान्द्रस्नपितभुजान्तराला मदीयाभावजनितयातनारोहिताश्वदन्दह्यमाननिर्बलहृदयकिसलया निर्विनोदान्यतिभारगुरूणि संवत्सरसहस्रायमाणानि दिवसान्येतानि बाष्पोत्पीडेषु दीर्घदीर्घनिःश्वासेषु कथंचिदतिवाहयन्ती निर्दयेन निरनुरागेण भर्तृकीटेन मया विनाकृता सा मे प्राणवल्लभा कथंकारं जीवलोके दुस्सहयातनामयनरककुण्डायमानं विरहं संप्रति सहेतेति वियोगेऽपि समधिकतरं संवर्धमाननिर्विकारप्रेमा कृपौदार्यसद्वृत्तगुणनिधिः कश्चित् प्रवासी तस्या दुर्विषहपीडामयमवस्थान्तरं वितर्कयन् सखेदं निध्यायति यदनेन मार्गेण मदीयप्राणभूतो भर्तागमिष्यतीति मनसि विधाय मदीयाध्वमार्गनिरीक्षणदत्तानुकम्पनीयदृष्टीन्दीवरायाः प्रियतमाया

महाविप्रयोगहुतभुग्ज्वालापरम्पराभिर्निरन्तरं सुतरां संतप्ते भस्मवद्विपाण्डुरवक्षोरुहकुम्भयुग्मशालिनि हृदयेऽविच्छिन्नविसरा नयनसलिलबिन्दवो झलज्झलाशब्दपूर्वं जर्जरिता नूनं विगलन्तीति। अत्र हि प्रथमपादे विरह एव वह्निरिति तादात्म्यद्योतकस्तद्रूपकम-भेदो य उपमानोपमेययोरिति काव्यप्रकाशकारनिर्णीतलक्षणसंवादी रूपकालंकारो वसन्ततिलकावृत्तशोभिनि श्लोके प्रवासविप्रलम्भस्या-तिदुस्सहत्वं विशेषेण व्यनक्ति।

**चिन्तामोहविनिश्चलेन मनसा मौनेन पादानतः**
**प्रत्याख्यानपराङ्मुखः प्रियतमो गन्तुं प्रवृत्तोऽधुना।**
**सव्रीडैरलसैर्निरन्तरलुठद्बाष्पाकुलैरीक्षणैः**
**श्वासोत्कम्पिकुचं निरीक्ष्य सुचिरं जीवाशया वारितः॥८५॥**

प्रासङ्गिके लीलाकलहावसरे कृतप्रणयस्खलितः **प्रियतमो** मदीयापराधेन संजातकोपा दुर्भरामर्षरोहितकपोलभित्तिस्तरङ्गित-भ्रूकुटिरचनाभीषणेयं मे कान्ता प्रणिपातेन प्रसन्नतां गमिष्यति न वेति दुर्निवारेण चिन्ताभारेण किंकर्तव्यतामूढत्वान्मोहेन च स्तम्भितेन निस्पंदेन चेतसा चाटूक्तिपुरस्सरसान्त्वनवचसां सर्वेषां निष्प्रयोजनत्वात्तूष्णींभावेन तस्याः कोपनायाश्चरणयोः प्रणिपतितो ऽपि सावेगमन्युस्फूर्जनवशात्तयैकपदे समुद्घोषितेनानुनयप्रत्यादेशेन निराकृतो यावदधुनैव निर्यातुं प्रवृत्तस्तावत् पादप्रणिपातात्मकस्यानु-नयविधेः प्रत्याख्यानस्याविचारेण कृतत्वात् संजातानुशयया तया तं विना जीवितुमक्षमत्वाज्जिजीविषया प्राणधारणप्रत्याशयाथ कोपपरित्यागसमकालजनितत्रपायुतैर्मानसिकसंक्षोभव्यपगममन्दीकृत रोषस्य स्वयं प्रशमितत्वादविश्रांतविगलन्नयनाम्बुविक्लवैर्दीनैर्दीनै-

र्वीक्षणैर्दीर्घकालमवलोक्यासौ प्रचुरनिश्वासोद्गमवेपमानस्तनकुम्भं निर्गमनान्निवारित इति विरहासहिष्णुतया प्राणदिधारयिषया च दूरीकृतमानाया मनस्विन्याश्चेतोवृत्तिं शंसति कान्तैकतानमनस्काबलाजनमनोविकारविज्ञः कविवरेण्यः कोपनिषेधनिर्गमननिवारणात्मकाक्षेपालंकारसुमण्डितेऽचिरभाविसंभोगपर्यवसायिविप्रलम्भशृङ्गाररसवाहिनि परिगृहीतशार्दूलविक्रीडितवृत्ते प्रशस्तश्लोकेऽत्र।

**म्लानं पाण्डु कृशं वियोगविधुरं लम्बालकं सालसं**
**भूयस्तत्क्षणजातकान्ति रभसप्राप्ते मयि प्रोषिते।**
**साटोपं रतिकेलिकालसरसं रम्यं किमप्यादरा–**
**द्यत्पीतं सुतनोर्मया वदनकं वक्तुं न तत्पार्यते ॥८६॥**

परिसमाप्तजनपदान्तरप्रवासेन सुचिरान्निजगृहागतेन बहुतिथकालावधिकविरहानलदग्धप्रायप्रियजायासंयोजनातिप्रमुदितेन लोकोत्तमामृतसारायमाणतदीयाधरमधुपानपुलकितवपुषा प्रोषितचरेण केनचिद्यूना निर्भरौत्सुक्यभूयिष्ठेन निर्वाच्यसंकल्पशतेन पुनर्लब्धया प्रेमास्पदायमानयानवद्यपातिव्रत्यतत्परया दीर्घीभूते विप्रयोगसमयेऽपि न कर्हिचिद्विस्मृतया रतिसंज्ञककंदर्पभार्यावतारायमाणया सौंदर्यमय्या सौहार्दप्रायया प्रियतमया यथाहृदयतृप्ति गृहागमनानन्तरमेव निर्विष्टां रोमहर्षणीं मान्मथलीलां विवक्षता विश्वासपात्रीभूताय कस्मैचित्सुहृदे प्रीतिपूर्वं स्मराननेन व्याह्रियते यन्नखंपचेन ग्रैष्मिकसूर्यतेजसा कुसुममिवासह्येन हृदयंतपेन संतापज्वरेण ग्लापितं मानसिकव्यथया प्रातस्तननीहारप्रच्छादितशाद्वलवद्विपाण्डुरमस्वास्थ्येन परिक्लेशेन च क्षामं दुर्विषहेण मद्विरहेणातिमात्रातुरं केशप्रसाधनविधिपरिहारेण विस्रस्तकलमष-

शिरोरुहपाशशालि निर्बलतया स्तिमितं सुचिरसोत्कण्ठप्रतिपालितप्रत्यागमने मयि प्रवासिनि मनोरथशतैः ससंभ्रमं सरभसं प्राप्ते सति दुर्भरप्रहर्षातिभारेण सपदि तत्क्षणमेव पुनर्विकसितद्युति मत्प्राप्तिसंतोषातिशयेन नितरामुत्सिक्तं चिरादुपभुक्तसुरतसमयाभिव्यञ्जितमधुरिमविशेषं किमपि रुचिरं यद् वियोगपीडातनूकृततनोः सुतनोर्मुखकमलं मया बहुमानात् परिचुम्बितं तदमृतसारवदनवद्यत्वाद् वक्तुमपि न खलु शक्यत इति। विशेषतोऽत्र चरमपादे वदनकमिति कप्रत्ययान्वितेन पदेन वात्सल्यातिरेको द्योतितोऽत्र च संपूर्णसंभोगशृङ्गारप्रोत्फुल्लाकारे शार्दूलविक्रिडितवृत्तसंनद्धपादे श्लोकरत्ने जात्यलंकारः पुनःकान्तसमागमप्रमुदिताया मत्तकाशिन्या वदनकस्य निसर्गरमणीयतां वर्णयन् शोभते ।

**सैवाहं प्रमदा नृणामधिगतावेतौ च तौ नूपुरा–**
**वेषास्माकमवृत्तिरेव सहजव्रीडाधनः स्त्रीजनः।**
**इत्थं लज्जितया स्मृतेरुपगमे मत्वा तनुं संभ्रमा–**
**त्पुंभावः प्रथमं रतिव्यतिकरे मुक्तस्ततो वल्लभः ॥ ८७ ॥**

एषाहमेव स्त्रीत्वेन सुविज्ञाता प्रमदा निर्मर्यादेनापि मनोद्रावकेण विपरीतनिधुवनेन भृशं प्रमदा संवृत्ता, न त्वहं पुरुषः एतौ च तौ नूपुरौ स्त्रीजनपादकटकत्वेन सुविदितौ, रागोद्रेकपूर्वं पुरुषायिताक्रमणेन कलहंसवत्कलकलशब्दायितौ, न तु पुरुषाणां चरणयोर्धारणीयौ किञ्च वल्लभायितलक्षणमिदमस्माकं नारीणामकार्यमेव स्त्रीजनश्च नैसर्गिकत्रपानिधिर्बोभवीतीत्येवंप्रकारेण दुर्निवारकंदर्पदर्पमदोन्मत्तत्वात् स्वकीयशरीरस्य मन्मथज्वरेण द्रवीभूतत्वाच्च

विस्मृतायाः स्वस्त्रीजातेः स्मरणप्रतिलाभे सुतरां व्रीडितया कामिन्या स्त्रीलिङ्गसमुपेतं निजदेहं सम्यगभिज्ञाय मधुरमधुरसुरतपर्यवसाने सरभसं पुरुषायमाणया पूर्वं पुरुषभावः पश्चात् स्त्रीभूतः प्रियतमो विपरीतनिधुवनविधेः परिसमाप्तत्वाद् व्यमोचीति विशिष्टरुचि-करेण रोमहर्षणेन विपरीतसुरतप्रकारेणापि हृद्यतरनानाविधरति-बन्धव्यतिकरवार्ताशुश्रूषूणां किंचिद्दुर्ललितानां रसिकानां मनांसि प्रीणयितुं श्राव्यमपि प्रेक्षणीयं प्रेक्षणकमिवोपलक्षितमेतन्मनोरमं पद्यं प्रदर्शयति शृंगाररसनिष्णातरसिकाग्रेसरोऽमरुः । अत्र खलु 'विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या । रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः ॥' इत्युदाहृतिवन्नि-धुवनविधौ प्रगल्भया नायिकया स्त्रीभावं त्यक्त्वा पुनः स्त्रीभावः प्राप्त इति हेतोः पुनःस्वगुणसंप्राप्तिः पूर्वरूपमुदाहृतमित्यलंकार-चन्द्रिकानिर्णीतलक्षणसंवादिनातिशयोक्तिगर्भितेन पूर्वरूपालंका-रेणातिशयसंभोगरसप्रवाही शार्दूलविक्रीडितवृत्तानुवर्ती श्लोकोऽयं विभूष्यते ।

**करकिसलयं धूत्वा धूत्वा विमार्गति वाससी**
**क्षिपति सुमनोमालाशेषं प्रदीपशिखां प्रति ।**
**स्थगयति मुहुः पत्युर्नेत्रे विहस्य समाकुला**
**सुरतविरतौ रम्या तन्वी मुहुर्मुहुरीक्षते ॥ ८८ ॥**

बुद्बुदवत्क्षणनश्वरे निःसारे जीवलोके पीयूषसारायमाणस्याति-रुचिरस्यानिर्वचनीयस्वादस्य सुरतस्य पर्यवसाने कमनीयाकृतिर्वर-वर्णिनी निःसीममन्मथसंग्रामविमर्दनग्नीकृतत्वान्निर्भरव्रीडाव्याकुला सतीतस्ततो विगलितं परिधानयुगलं हस्तकिसलयं चारयित्वा

चारयित्वा गवेषयति तत आत्मनो दिगम्बरभावेन लज्जितत्वाद् भास्वत्प्रदीपनिर्वापणार्थं महाकंदर्पसांपरायिकसंक्षोभविस्रस्तावशिष्टं सुमनोदामच्छेदं प्रदीपज्वालाभिमुखे प्रक्षिपति नग्नां मां कथं नाम सावधानं निध्यायसि हे दुर्विनीतेति स्मित्वाभीक्ष्णं स्वदिगम्बर-भावदिदृक्षातृषितस्य भर्तुर्दृष्टी निमीलयति मनोविमोहननिधुवनद्र-वीभूतत्वाच्च सान्द्रस्नेहपूर्वकं प्रियतमं पौनःपुन्येनावलोकयतीति वरारोहायाः संभोगान्ते मनोहरो विभ्रमः सरसमुपवर्ण्यते लोकोत्तर-शृङ्गारिकविवरेण्येन।

मनोद्रावके सुरतविधौ व्यपेतसमस्तत्रपायाः सुरतावसाने स्वनग्नभावेन पुनः संजातसहजलज्जायाः पीनस्तन्याः कामिन्याः स्वाभाविकविलासद्योतनसमुत्थेन जात्यलंकारेण मञ्जुलमवतंसितः परिपूर्णसंभोगशृङ्गाररसनिष्यन्दी हरिणीवृत्तसंदानितचरणशोभी सुरसः श्लोक एष महाकविना कालिदासेन सुरतारम्भे 'नीवी-बन्धोच्छ्वसितशिथिलं यत्र बिम्बाधराणां क्षौमं रागादनिभृतकरे-ष्वाक्षिपत्सु प्रियेषु, अर्चिस्तुङ्गानाभिमुखमपि प्राप्य रत्नप्रदीपान् ह्रीमूढानां भवति विफलप्रेरणा चूर्णमुष्टिः' इति विरचितं मेघदूत-काव्यान्तर्गतं पद्यं स्मारयति।

**सन्त्येवात्र गृहे गृहे युवतयस्ताः पृच्छ गत्वाधुना**
**प्रेयांसः प्रणमन्ति किं तव पुनर्दासो यथा वर्तते।**
**आत्मद्रोहिणि दुर्जनैः प्रलपितं कर्णेऽनिशं मा कृथा-**
**श्छिन्नस्नेहरसा भवन्ति पुरुषा दुःखानुवर्त्याः पुनः॥ ८९॥**

रतिलम्पटेनोच्छृंखलशीलेन दयितेन स्वच्छन्दं निर्वर्तितस्यान्याङ्ग-नासङ्गमरूपस्य दुश्चरितस्याकर्णनेनातिशयरोषितामाराधनाय सविनयं पादयोः कृतदण्डप्रणाममपि तं निराकृत्याजस्रमीर्ष्यमाना-

भिनिविष्टां दुराराध्यां दुराक्रमक्रोधात्मकदुर्गाश्रितत्वाद् दुर्धर्षां मनस्विनीममर्षाग्रहं परित्याजयितुं सनिन्दमुपदिशति व्यलीककोविदेन कैतवनिरतेन तेन प्रकृतधूर्तेन मदर्थे त्वमेवमेवं कुर्विति सम्यग्ग्राहित-शिक्षा तत्सखी प्राहेह जनपदे प्रतिगेहं बह्व्यो योषितो बोभुवति संप्रति शीघ्रं गत्वा तास्ताः पर्यनुयुङक्ष्व किं समाराधनार्थं प्रियतमा युष्मभ्यं प्रणतिं तथा कुर्वन्तीति यथा ते प्रेयान् तु दासवत् प्रणामं कुर्वन् सविनयमनुवर्तते, तद्धे अविचारे ! हे आत्मद्रोहिणि ! द्विजिह्वैः पिशुनकर्णजपैः परसुखविद्वेषिभिर्जल्पितं मृषावादं सततं कर्णे मा स्म कार्षीः, यदि तादृशं वितथं परस्परानुरक्तयोर्युवयोर्भेदकरं प्रलपितमेकस्मिञ्छ्रवणे यदृच्छयापि प्रवेशं कुर्वीत तर्ह्यपरस्माच्छ्र-वणाज्झटिति तदपसारय, न कर्हिचिदपि तादृशं हृदये कर्तव्यं यथा व्यपेतप्रेमभावाः पुरुषाः पुनर्दुष्प्रापा अनुनेतुमप्यशक्या भवन्ति हीति । अत्रात्मद्रोहिणीति संबोधनशब्देन दुर्जनप्रलपितं श्रुत्वा संजातमन्युस्त्वं मानं न परित्यजेश्चेत् तर्ह्यामरणं भर्त्रा विनाकृता जीवन्मृता स्या नूनमिति सूच्यते पुनः पूर्वार्धेन भर्ता सर्वश्रेष्ठस्त्वयि भृशं स्निह्यति तस्माद्धेतोः स्वप्नेऽपि तं मा त्याक्षीरिति द्योत्यत इत्येवंप्रकारेणात्मद्रोहकरं मानाग्रहं जहीहीति विवक्षितस्य निषेधेन मानस्य प्रतिषिद्धत्वादाक्षेपालंकार इर्ष्यामानजनितविप्रलम्भावबोधके शार्दूलविक्रीडितवृत्तयुजि मुक्तकेऽस्मिन् प्रादुर्भवति ।

**निःश्वासा वदनं दहन्ति हृदयं निर्मूलमुन्मथ्यते**

**निद्रा नैति न दृश्यते प्रियमुखं नक्तंदिनं रुद्यते ।**

**अङ्गं शोषमुपैति पादपतितः प्रेयांस्तदोपेक्षितः**

**सख्यः कं गुणमाकलय्य दयिते मानं वयं कारिताः ॥ ९० ॥**

यतः प्रणयकलहकुपितां निर्विचारां मामाराद्धुं सस्नेहं चरणप्रणिपतितः प्राणदयितो यौष्माकीणविदग्धोपदेशपारवश्यादज्ञानेन तदा मयावधीरितस्ततो दुर्धरान्तःसंतापानलक्वथिता अत्युष्णा निश्वासा ममाननं दन्दह्यन्ते मालतीपुष्पाधिकमृदुनिर्बलं कान्तविरहितत्वान्निरालम्बं मे हृदयकमसह्यव्यथामन्थदण्डेनामूलादुन्मामन्थ्यतेऽविच्छिन्नाधिमरीमृद्यमानाया मे निद्रा नागच्छति ममासुधारणीभूतस्य मदीयसर्वस्वस्य प्रियतमस्य जीवातुकल्पो वदनेन्दुर्न भूयो दृष्टिगोचरे निपतति दुर्भरविश्लेषनिर्वेदजलनिधिनिमग्नया निरन्तरोदश्रुनेत्रया मयाजस्रमजस्रं रात्रिंदिवा रोरुद्यते ललाटंतपैर्निदाघमिहिरकिरणैः शुष्कतां गता दुर्बलालतेव हृदयंपचैर्नरकयातनायमानैर्मानसिकसंज्वरैर्भृशंसंतातप्यमाना मे गात्रवल्लरी शोशुष्यते च, हे दुर्विदग्धाः सख्यः! कथयत किंरूपं फलं लक्षीकृत्य मुग्धा वयं युष्माभिरतिप्रगल्भाभिः प्रसह्य खल्वेवंविधापद्धेतुकं कृत्रिमममर्षं ग्राहिता इति निर्विमर्शाभिः सहचरीभिरुपदिष्टेनाकिंचित्करेणापि महानर्थजनकेन मानेन तदा लीलाकलहप्रसंङ्गेऽनुनिनीषुं वल्लभं सावहेलमनादृत्य चरमं तेन विनाकृता निष्प्रयोजनपश्चात्तापग्रस्ता काचिदतिमुग्धा तरुणी ताः सकरुणमुपालंभमुपालंभं पर्यनुयुङ्क्ते । 'भक्ष्याशयाऽहिमञ्जूषां दृष्ट्वाखुस्तेन भक्षितः' इतिनिदर्शनवदत्रापि प्रणयकलिविषयकं माननिर्बन्धं सुव्यक्तमेव समीहितार्थप्रेप्सया स्वकामिनेऽभिव्यज्य मौर्ख्यविभूषणा सा कलहान्तरिता न केवलमभीष्टार्थविध्वंसं किन्तु विरहात्मकमनर्थमपि दैवयोगात् प्रापदिति हेतोर्विषमालंकारो दुर्विषहविप्रलम्भविषादातिरेकद्योतकं शार्दूलविक्रीडितवृत्तसमन्वितमिदं मुक्तकं प्रस्तुतकामिन्या अतिमौग्ध्यजनितवियोगरूपापत्तिप्रख्यापनेन विशेषयति ।

**अद्यारभ्य यदि प्रिये पुनरहं मानस्य वान्यस्य वा**
**गृह्णीयां शठदुर्नयेन मनसा नामापि संक्षेपतः ।**
**तत्तेनैव विना शशाङ्कधवलाः स्पष्टाट्टहासा निशा**
**एको वा दिवसः पयोदमलिनो यायान्मम प्रावृषि ॥९१॥**

पूर्वं विहितप्रणयापराधं प्रेयांसं तत्कालपरिस्फुटितनिर्मर्यादक्रोधवशान्निरस्य निरन्तरानुभूतदुर्वहानुशयातिभारा दुस्सहपीडामयविरहसंतापपेपीड्यमाना ततः कथंचित् कथंचित् प्रयत्नशतेन सौभाग्योदयसाहाय्येन च प्रतिलब्धतत्समागमप्रमोदोद्रेका सनिर्वेदनिर्विष्टपूर्वं हृच्छूलायितं विप्रयोगदौर्भाग्यं स्मारं स्मारं काचिन्मनस्विनी नरककुण्डसदृशकान्तविश्लेषहेतुकं मानं तं प्रति कर्हिचिदपि पुनर्न करिष्यामीति शपथपूर्वं व्यवस्यति यदद्यप्रभृति हृदयमर्मवेधिविरहोत्पादकस्येर्ष्याकोपस्य वा तत्समानस्यापरस्य वा केवलं नामधेयमपि संक्षेपेण प्रियतमस्यापराध दोषारोपकेण दुष्टेन चेतसा तमुद्दिश्य स्वप्नेऽपि पुनरहमुच्चारयेयं चेत्तर्हि तेन हृदयवल्लभेन विनैव निश्चितप्राणपरित्यागाया मम कुमुदबान्धवधवरिता शारदीयकौमुदीजालोच्चैर्हासशुभ्रा अतिहृद्यरागोद्दीपिकाः सुरतक्षणदा विभावर्यो व्यतीयुरेको वा श्यामश्यामजलमुगावलिमलीमसदुर्दिनायमानोऽतिमात्रोत्कण्ठाजनकः प्रावृषेण्यवासरोऽतियायादिति ।

नन्वत्रोत्तरार्धेन विरहिजनस्य कृते शरच्चन्द्रमाट्टहासधवलानां निशीथिनीनां वा प्रावृट्कालीनस्य वा दिवसस्यात्यन्तदुर्विषहता द्योत्यते पुनश्चात्र निर्विचारमानजनितो विरहः समुत्पद्येत चेदवश्यमेव मरणं मे भविष्यतीति तस्या अभिप्रायोऽपि स्पष्टमवगम्यते किञ्चात्र मानजविप्रलम्भानन्तरोत्पन्नसंभोगशृंगारशंसिनि शार्दूलविक्रीडितवृत्तयुजि पद्ये विरहिणीहृदयच्छिदो विरहादपि वरं

मृत्युरिति मनसि कृत्वा मानं न करिष्य इति तया व्यवसितत्वाज्जात्यलंकारो जायते ।

**इदं कृष्णं कृष्णं प्रियतम ननु श्वेतमथ किं**
**गमिष्यामो यामो भवतु गमनेनाथ भवतु ।**
**पुरा येनैवं मे चिरमनुसृताः चित्तपदवी**
**स एवन्यो जातः सखि परिचिताः कस्य पुरुषाः ॥ ९२ ॥**

हे प्रियतम ! वस्त्वेतच्छयामरुचि, बाढं प्रियतमे ! श्यामं भवति, प्रियतम ! नन्विदं धवलम्, अथ किं प्रियतमे ! धवलं भवति, दयित ! बहिर्यास्यामः, दयिते ! तथा कुर्मः, हे वल्लभ ! गमनं मास्तु, यदि गमने नाभिलाषस्तव वल्लभे ! गमनेन किं कार्यम्, प्राणनाथ ! तिष्ठामोऽत्रैव, जीवितदयिते ! तथा कुर्मः, हे प्रेयन् ! सुषुप्साम्यधुना, अयि प्रेयसि ! स्वपिम इत्येवं संवर्धमानमान्मथरसाकृष्टत्वात् सुरसपुष्पसारावर्जितमधुपिपासेन मधुपेनेव येन प्रेयसा मम चित्तवृत्तिर्निर्विकारेण मनसा पूर्वं दीर्घकालमनुवृत्ता सोऽयं परकीय इव संप्रति संजातो हे अविज्ञातपुरुषमनस्के मुग्धे सखि ! पश्य कस्य परिचिताः पुरुषा न कस्यापि, वस्तुतो विश्वासानर्हा नरा अनेकस्त्रीसंभोगलम्पटास्ते पुष्पात् पुष्पमनुचञ्चूर्यमाणाश्चञ्चलाश्चंचरिण इव योषितो योषिदन्तरं योषिदन्तरात् पुनरपरामनुसेस्त्रीयन्त इति चपलपुरुषसहेलनिर्वर्तितप्रणयभंगकलुषितान्तःकरणां वनितान्तराभिगमनरूपेण स्वीयभर्तुः प्रथमकलमषेण निर्भरेर्ष्यामानप्रतिपन्नां नवोढां वधूं सम्यक्प्रकारेणावबोधयति काचिदात्मीयकान्तचापल्यनिदर्शनद्वारेत्यत्र शिखरिणीवृत्तकल्पिताकृतौ मानमूलकविप्रलम्भकलुषरसपङ्किले बहुस्त्रीरतिलोलुपेषु निकृष्टशीलेषु पुरुष-

कीटेषु मानेन किं कार्यमत एव त्वमपि लौल्यदौर्मनस्यभूयिष्ठं नरस्वभावं ज्ञात्वापराधिनि भर्तरि मानं परिहृत्य केवल-मौदासीन्येन स्वस्थेन च मनसास्स्वेति वक्त्र्या लोललोलचेतसां पुरुषाणां स्वभाववर्णनात् स्वभावोक्त्यलंकारः प्रादुर्भवति ।

**चरणपतनं सख्यालापा मनोहरचाटवः**
**कृशतरतनोर्गाढाश्लेषो हठात्परिचुम्बनम् ।**
**इति हि चपलो मानारम्भस्तथापि हि नोत्सहे**
**हृदयदयितः कान्तः कामं किमत्र करोम्यहम् ॥ ९३ ॥**

अनुष्ठितप्रणयापराधत्वान्मां सिसान्त्वयिषुणा प्रेयसा सानुशयं विहितः पादप्रणिपातः, केवलं त्वयि सुतरामनुरक्तत्वाद् यदृच्छया निर्विचारं कृतेन प्रणयस्खलितेन सांप्रतमनुभूयमानदुर्भरविप्रतीसार-मित्थात् त्वच्चरणयोः प्रणिपतितं कान्तं क्षमस्वेति सखीनां प्रार्थ-नावचांसि, मां प्रसादयितुं तेन समुच्चारिता हृदिस्पृशोऽतिरम्याः प्रियोक्तयः, दुर्निवारसंतापक्लिशितस्य मामकस्य निर्बलशरीरस्य नीरन्ध्रालिङ्गनम्, सान्द्रप्रेमोद्रेकद्योतनाय प्रसभं तेन विहितं परिचुम्बनमिति हि चञ्चलः क्षणभङ्गुरो मानप्रक्रमो बहुफलो भवति तथापि क्षणनश्वरमपि बहुफलान्वितमपि सनिर्बन्धप्रणय-कोपकरणे शक्तिरहिताहं मानारम्भं पुनः कर्तुं न प्रोत्सहे, यस्मान्मे प्रेयान् प्रकामं हृदयवल्लभो वरीवर्तीत्थंभूते किं करोमि शाधि मामिति प्राग् वयस्यया मानप्रकाशनविषयमुद्दिश्य यथावसरं ग्राहितशिक्षणापि मौग्ध्यातिशयेनात्यन्तसरलस्वभावशालितया वातः परं किंकर्तव्यतामूढचेताः काचित्तरुणी पुनरुपदेशलिप्सया निगदती-तीर्ष्यामर्षमूलकविप्रलम्भशृङ्गारद्योतके हरिणीवृत्तमण्डितचरणेऽत्र मुक्तके चपलो मानारम्भस्तथापि हि नोत्सहे हृदयदयितः कान्त

इत्यादिना हेतुमता सार्ध हेतोर्हरिणलोचनया वर्णितत्वाद्धेत्वलंकारः। ननु चापल्यनिरतेऽपि भर्तरि सुदृढबद्धस्नेहरज्जुः पतिप्राणा का कोपपुरस्सरप्रणयकलहजमचिरनश्वरमपि विरहशोकं निर्वेष्टुमुत्सहेत ?

**तन्वङ्गया गुरुसन्निधौ नयनयोर्यद्वारि संस्तम्भितं**
**तेनान्तर्गलितेन मन्मथशिखी सिक्तो वियोगोद्भवः।**
**मन्ये तस्य निरस्यमानकिरणस्यैषा मुखेनोद्गता**
**श्वासायाससमाकुलालिसरणिव्याजेन धूमावली॥ ९४॥**

बहुतिथकालावधिकप्राणदयितभर्तृविश्लेषवैश्वानरशिखावलीलेलिह्यमानहृदयकूपाया दुर्विनयचापल्यशङ्कया बहुमतगुरुजनसान्निध्ये दुस्सहवेदनाजनकविरहसंतापोद्भिद्यमानमपि बाष्पोत्पीडं कृच्छ्रादन्तर्निरुद्धवत्या अकाण्डनौव्यसनेनेवाकस्मिकभर्तृवियोगवज्रपातेनातिशयदुष्टरनिर्वेदसागरे निपातितायाः कस्याश्चित् प्रोषितभर्तृकाया दुरवस्थामुपविवर्णयिषुणा सदयहृदयेन कविवरेण्येन सखेदमत्र व्याह्रियते यत् कान्तविप्रयोगपरिक्लेशक्षामक्षामगात्रया वध्वा श्वश्रूश्वशुरप्रमुखानां सभाजनार्हाणां गुरूणां समक्षमश्रुमोचनस्यायुक्तत्वाद् यो लोचनयोरुभ्दिद्यमानोऽश्रुप्रवाहो हृदये बलात्कारेण प्रतिरुद्धस्तेनैवाभ्यन्तरे प्रसह्य प्रत्यावर्तितेनाश्रुप्रवाहेणासह्यपीडविरहसंभवो मनोभूजातवेदाः समुक्षितस्ततो मन्दीकृतशिखस्य तस्य जातवेदस एषा धूमलता तस्या वदनसौगन्ध्याकृष्टानां किन्तु संतापसंतप्तात्युष्णनिश्वासार्तानां चञ्चरीकाणां परम्पराव्यपदेशेन तन्मुखद्वारा निःसृतेति।

खल्विह मन्मथशिखिनो धूमावलीरूपेऽलिसरणेः सभावितत्वात् 'संभावनमथोत्प्रेक्षा प्रकृतस्य परेण यत्' इति काव्यप्रकाश-

निर्णीतलक्षणोपेतोऽतिशयाङ्कितगर्भो मन्मथशिखिशब्दद्योतितरूपकानुसृत उत्प्रेक्षालंकारः प्रवासविप्रलम्भशृङ्गारमृदितवधूबाष्पोत्पीडसंसिक्ते शार्दूलविक्रीडितवृत्तनियमितपादे मुक्तकरत्ने विरहिण्या दुर्वहमानसिकव्यथातिशयं विशेषेणास्मभ्यं शोकवारिधिनिमग्नविरहिमिथुनदयालुभ्यो निवेदयन् भासते ।

**भ्रूभेदो गुणितश्चिरं नयनयोरभ्यस्तमामीलनं**

**रोद्धुं शिक्षितमादरेण हसितं मौनेऽभियोगः कृतः ।**

**धैर्यं कर्तुमपि स्थिरीकृतमिदं चेतः कथंचिन्मया**

**बद्धो मानपरिग्रहे परिकरः सिद्धिस्तु दैवे स्थिता ॥ ९५ ॥**

मान्मथलीलाकलहप्रसङ्गेऽपराधिनं परिणेतारं लक्षीकृत्य प्रपञ्चयितुं बद्धपरिकरया मया समस्तमानोपस्करनिकुरम्बमुररीकृत्य पौनःपुन्येन यथात्वदुपदेशं दर्पणमेकमग्रे संस्थाप्य सम्यक्परिशीलितं तथापि निर्विघ्नमाननिर्वाहणं तु दैवायत्तं भविष्यतीति ससंदेहं काचिन् मौग्ध्यनिधिर्नववधूः प्रणयसर्वस्वाभिज्ञां सलीलेर्ष्यामर्षप्रपञ्चनकोविदां सर्वावस्थोचितकंदर्पविलासचेष्टितनिष्णातां मानोपदेशिनीमभिभाषते यद् विजने हस्तधृतमुकुरया मया सुचिरं तरङ्गितभ्रूकुटीरचना समाम्नाता दृष्ट्योः सभ्रूभङ्गदरसंकोचनमभीक्ष्णं परिचितं भर्तृबहुमानेन नूनं जनिष्यमाणां स्मितिं प्रयत्नतो निषेधितुं मयाभ्यस्तमप्रसादव्यञ्जके मूकभावेऽभिनिवेशोऽनुष्ठितो धृतिसंपादनायेदमपि कातरं मनो मया कथमपि स्थैर्यं प्रापितमित्थमीर्ष्यामानप्रपञ्चस्वीकारे सुदृढं मया कक्ष्या बद्धा किन्तु प्रणयमानस्य सफलनिर्वर्तनं नियतिबलाधीनमिति ।

परमार्थतोऽत्र स्वभावसुकुमारया प्रणयिपाणिग्राहैकतानप्रेमसर्वस्वयातिसरलहृदयया मुग्धया वध्वा कृत्रिमभ्रूकुटिविरचनादिके

मदनकोपोपयोग्युपकरणसामग्र्येऽविच्छिन्नाभ्यासेनातिकृच्छ्रादङ्गी-कृतेऽपि स्वप्राणनाथसंनिधौ प्रबलेन स्वाभाविकेन प्रेम्णा ननु विजित्य कृतककोपः कांदिशीको भूत्वा कुत्रापि सहसापसरेदिति संशयः संसूच्यतेऽत्र चान्तिमपादे बद्धो मानपरिग्रहे परिकरः सिद्धिस्तु दैवे स्थितेति संभावनाविशेषविवक्षया सप्रयत्नसमाम्नातोऽपि मानो न खलु सफलीभविष्यतीति बिभाषिषितस्य निषिद्धत्वादाविर्भूत आक्षेपालंकारः शार्दूलविक्रीडितवृत्तेन साकं शोशुभ्यते ।

**अहं तेनाहूता किमपि कथयामीति विजने**
**समीपे चासीना सरसहृदयत्वादवहिता ।**
**ततः कर्णोपान्ते किमपि वदताघ्राय वदनं**
**गृहीता धम्मिल्ले सखि स च मया गाढमधरे ॥ ९६ ॥**

दुर्निवाररिरंसाभिभूतत्वात् सुरतलम्पटेन कामुकेन यथारुचि वञ्चिता काचित् पुंश्चली कस्मिंश्चिन्निर्जने स्थाने तेन सहोपांशूप-संभुक्तामनङ्गक्रीडां सहर्षं विवृण्वन्ती विश्वासपात्रीभूतां स्ववयस्यां ब्रूते हे सहचरि ! विविक्ते स्थाने रहसि किंचिद्विस्रब्धं ते कथयि-ष्यामीति विदग्धेन तेन धूर्तेनोपनिमन्त्रिताहं तद्दर्शनौत्सुक्यसमाकुल-प्रेमरसार्द्रार्द्रहृदयतया तं समया परिगृहीतासना किं वदिष्यत्यय-मिति तद्वचनशुश्रूषया सावधाना तदानीमभूवं ततो मत्परिचुम्बन-तृष्णया न त्वभिधित्सया श्रवणान्तिके सव्याजं किंचिद् व्याहरता तेन दुर्ललितेन कितवेन मुखमाघ्राय सुमनोदामभूषणसंयते केशपाशे गृहीता, स च निधुवनमहोत्सवप्रस्तावोत्सुकया मयापि सुरसेऽधर-पुटे गृहीतः समन्ताच्चुम्बितस्तदनन्तरं प्रज्वलितरागानलाभ्यामावा-भ्यामनिर्वचनीयो मन्मथमहामहो यथेच्छमनुभूत इति ।

कामिनीसंभोगलोलुपावशात् किमपि कथयामीति व्यपदेशेन तामतिसंधाय कामिना तेन स्वरिरंसा साफल्यमनायीति हेतोर्युक्तिनामकेनालंकारेण सुस्वादुसंभोगशृङ्गाररसप्रवाही स्वीकृतशिखरिणीवृत्तादेशकल्पितपादः श्लोक एष संभोगरसतृष्णालूनां रसिकानां मुदे सुष्ठु समलंक्रियत इत्यत्र न कोऽपि मेऽतिशयोक्तिगन्धः।

**देशैरन्तरिता शतैश्च सरितामुर्वीभृतां काननै–**
**र्यत्नेनापि न याति लोचनपथं कान्तेति जानन्नपि।**
**उद्ग्रीवश्चरणार्धरुद्धवसुधः प्रोन्मृज्य सास्रे दृशौ**
**तामाशां पथिकस्तथापि किमपि ध्यायन् पुनर्वीक्षते ॥ ९७ ॥**

अत्यन्तविप्रकृष्ट–देशान्तरे सविषादं वसतिं कुर्वतः समस्तबान्धवसुहृज्जनविरहितत्वान्निर्बन्धोः प्रतिक्षणोपबृंहत्कान्तासमागमौत्सुक्यातिरेकाध्मातान्तरङ्गस्यापि दुर्गमजनपदशतव्यवहितत्वेन दृष्टिश्रवणविषयसुदूरातिक्रान्ताया निष्ठुरतुषारमृदितायाः पद्मिन्या इव निष्करुणविरहातुराया निर्बलाया हृदयदयितायाः सुचिराभिलषितकुशलवार्ताकर्णनेऽप्यतिरुचिरपीयूषसारायमाणदर्शनेऽपि निराशस्य निर्विण्णमनसोऽजस्त्रोद्भिद्यमानबाष्पोत्पीडदुर्दिनायमानाननस्यासह्यव्यथप्रवासस्थस्याध्वनीनस्य दुर्भरविषादोत्कण्ठाव्यतिकरकीलितदुरवस्थोपविर्णयिषया गाढानुरक्तदयिताविप्रयोगव्यथामरीमृद्यमानप्रवासिसार्थबन्धुः पुण्यश्लोकोऽमरुः सदयमभिदधाति यद् दुरासदैरनेकैर्विभिन्नैर्जनपदैश्च दुस्तराणां तरङ्गिणीनां दुराक्रमाणां भूभृतां शतैश्च दुरतिक्रमाभिर्गहनाटवीभिश्च व्यवहिता प्रियजाया प्रयत्नशतेनाप्यात्मनो दृष्टिगोचरं नायातीति विद्वान्नपि तद्दिदृक्षातिशयपारवश्यात् कन्धरामुद्धृत्योच्छ्रितो भवितुं पादाग्रेण भूमिं निरुध्य वियोगशोकजाश्रुसंसिक्ते नयने हस्तेन मृष्ट्वा तथापि

तद्विषयकं किमपि किमपि विचारयन्नध्वगस्तामेव तस्याः सङ्गमाशासमन्वितामाशां भूयो भूयोऽवलोकयतितराम्।

ननु विरहे समधिकतरं वृद्धिं गच्छति प्रेमानुकूलस्य पथिकसार्थस्य प्रेमभाव इति निगूढाशयद्योतकं दुस्सहप्रवासविप्रलम्भपीडाविमृदितपान्थनिर्भरौत्सुक्यख्यापकं शार्दूलविक्रीडितवृत्तादेशसज्जीकृतचरणचतुष्टयं विरहिजनानुरागोद्रेकार्द्रीकृतकाव्यरसिकसपुहं प्रकृष्टमुक्तकमिदं विभूषयति कान्ताविरहितस्य तपस्विनोऽतिमृदुलस्वभावाभिव्यञ्जकः स्वभावोक्तिर्नामालंकारः।

वस्तुतो दुर्गमानपि सकाननपर्वतनदान् बहून् विदेशान् कथमपि भार्यासंजिगमिषया समुल्लङ्घिष्यमाणः प्रज्वलितविश्लेषहुतभुग्दग्धकल्पोऽयं वराकः प्रवासविप्रलम्भजनितनिर्वेदक्षामक्षामाङ्गीं समागमोत्कलिकासहस्रविद्धहृदयपल्लवामृदश्रुनेत्रां तामचिरेण पुनर्दृष्ट्वा चिरकालानुपभुक्तत्वादुपचितस्नेहरसमधुरतरं संभोगसुखं तया सह यथातृप्ति निर्विश्यादिति प्रवासिन एकाकिनस्तस्य भृशं दयमानानामस्माकमाशा।

**चक्षुःप्रीतिप्रसक्ते मनसि परिचये चिन्त्यमानाभ्युपाये**
**रागे यातेऽतिभूमिं विकसति सुतरां गोचरे दूतिकायाः।**
**आस्तां दूरेण तावत्सरभसदयितालिङ्गनानन्दलाभ-**
**स्तद्गेहोपान्तरथ्याभ्रमणमपि परां निर्वृतिं संतनोति ॥९८॥**

कदाचिद् यदृच्छया स्वदृष्टिपथे पतितां कमनीयवपुषं परकीयां विलासिनींदृष्ट्वा सपदि संजातप्रथमचक्षूरागो निरङ्कुशमनसिजवागुरानिपतितमानसो दुर्लभायास्तस्या अवाप्तिविधायकोपायचिन्तनव्याकुलः कश्चिद्युवा निजातृप्तैकानुरागं वर्णयन् विश्वासपात्रीभूतं सखायमभिभाषते यन्मे मनसि दुर्भरप्राथमिकचक्षूरागाभिनिविष्टे

सति कथं नाम निर्भरप्रेमास्पदीभूतां वरवर्णिनीं तां लभेय कथंकारं वा दुष्प्रापायास्तस्याः संस्तवं प्राप्नुयामिति परिचयविषये निरन्तरं विमृश्यमानविविधयोग्योपाये सति प्रेमभावे परां कोटिमधिरूढे सति तत्सङ्गमसंपादनाय तादृग्विधव्यापृत्तिविशेषनिष्णाताया अघटित-स्त्रीपुरुषघटनाचतुराया दूत्या अधिकारविषये मदर्थेऽतिमात्रं विलसति सति ससंभ्रमप्रेयसीपरिरम्भणप्रहर्षप्रकर्षावाप्तिस्तावदधुना दूरतस्ति-ष्ठतु तदीयवेश्मनिकटवर्तिप्रतोलीपर्यटनमप्यत्युत्कृष्टां संतुष्टिं जन-यति। एकानुरागातिशयाभिव्यञ्जकेऽत्र खलूत्तरार्धे यद्यपि निःसीम-स्नेहभूमेस्तस्या वरारोहाया पीनस्तन्याः परिचुम्बनालिङ्गनविधिः परमानन्दं निःसंशयं संजनयिष्यति तथापि निर्मर्यादरागोद्भेदवशा-द्विधीयमानं तदीयसदनसमीपस्थराजमार्गपरिभ्रमणमप्यनिर्वचनीयं प्रमोदं मे संपादयतीति परकीयमत्तकाशिनीसंभोगतृष्णान्धतामि-स्रनिमग्नमनसा चक्षूरागोद्रेकोन्मत्तप्रायेण कामुकेन व्याहृतत्वादति-शयोक्तिसंज्ञकेनालंकारेण स्रग्धरावृत्तविरचिताकृतिर्भविष्यत्संभोग-शृङ्गारसूचकोऽयं श्लोकः परिभूष्यते।

**कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धना–**
**द्वासो विश्लथमेखलागुणधृतं किञ्चिन्नितम्बे स्थितम्।**
**एतावत्सखि वेद्मि सांप्रतमहं तस्याङ्गसङ्गे पुनः**
**कोऽयं कास्मि रतं नु वा कथमिति स्वल्पापि मे न स्मृतिः ॥९९॥**

केन प्रकारेण त्वं हृदयवल्लभेन सार्धं सुरतमहोत्सवमनुभव-सीति रहस्यगोष्ठीप्रसङ्गे प्रियवयस्यया पर्यनुयुक्ता स्वायत्तभर्तृका काचिद् योषित् प्रतिवक्ति हे प्रियसहचरि! निरुपमपीयूषसारा-यमाणमनिर्वचनीयमधुरिमविशेषातिहृद्यास्वादं मनोद्रावकं निधुवन-विलसितं यथेच्छं निर्वेष्टुं मदीयसर्वस्वभूतेऽतिशयानुरक्ते भर्तरि

सर्वथातिरुचिकरानङ्गरङ्गानुरूपमुच्छृंखलमान्मथसंग्रामभूमिरूपं विलासशयनीयकमारूढे सति करस्पर्शमन्तरेणापि किंस्विच्चेतोमोहनकन्दर्पदर्पतन्मयसंमर्दापेक्षयोताहोस्विन् निर्मर्यादरागोद्रेकसात्विकातिरेकेण ममाच्छादनांशुकस्य नीवी बन्धनादात्मनैव विस्रस्ता तदनन्तरमधोवसनं शिथिलितेन काञ्चीदाम्ना निर्बलं ध्रियमाणं कान्तहस्तसंपर्कलालसे पीवरे जघनस्थले दरावलम्बितमितीयन्मात्रमेवाहं केवलं संप्रति स्मरामि, पुनर्हृदयद्रावके तस्य शरीरसंस्पर्शे तु सर्वलोकचमत्कारिणा पुष्पधन्वना विमोहितसर्वाङ्गतया निर्वाच्यरतिसर्वस्वेन च सुतरां जडीकृतचैतन्यतया कोऽसौ का वाहं कथंभूतो वा निधुवनरस आस्वादित इति स्मृतिगन्धोऽपि मे नास्तीति।

अतिहृदयतृप्तिकरेणातिमात्ररोमहर्षणेन याथातथ्येन निःसारजीवलोकसारायमाणेन सर्वोत्तमामृतरसप्रख्येन वर्णनशक्तिगोचरातीतेन सुरतेन रतेन मोहजाड्यान्धकूपे नितम्बांशुकग्रन्थिविस्रंसनसम कालमेवैकपदे निपातितैषा सर्वात्मना समूलोपसंगृहीतसूक्ष्मतमसंभोग शृङ्गारामृतसारा वरवर्णिनी किंरूपं किमास्वादं कथंभूतं मनसिजयुद्धं कथंकारं स्वयं समुपभुक्तमिति निर्वृत्तिप्रमोदातिशयमूलकेन स्मृति भ्रंशेन वक्तुमपि न खलु शक्नोतितरामित्यत्रात्युल्बणसंभोगशृंङ्गार प्रस्रवणस्नपितप्रमुदितरसिकनिवहे स्वीकृतशार्दूलविक्रीडितवृत्तविरचितरम्याकृतौ प्रकृष्टश्लोके सुरतद्रवीभूतायास्तस्या वरारोहायाः कमनीयपीनस्तन्याः स्वाभाविकचेष्टावर्णनोत्थो जात्यलंकारो निगूढमान्मथरहस्यं प्रपञ्चयन्निव प्रतिभाति।

अहो महदाश्चर्यमेतद् यत् सुरससुरतशब्दमात्रश्रवणेनैव संजाजायते रोमहर्षः शरीरेषु वेपथुश्च हृदयेषु सर्वेषां तथाप्याशास्महे वास्तविकं सुरतं सर्वत्र सर्वदा च केवलं न्यायमार्गस्थस्त्रीपुंधर्माविरुद्धमेवास्तु।

**प्रासादे सा दिशि दिशि च सा पृष्ठतः सा पुरः सा**
**पर्यङ्के सा पथि पथि च सा तद्वियोगातुरस्य ।**
**हंहो चेतः प्रकृतिरपरा नास्ति मे कापि सा सा**
**सा सा सा सा जगति सकले कोऽयमद्वैतवादः ।। १०० ।।**

सर्वोत्तमप्रेमास्पदीभूतया कान्तया दैवदुर्विपाकवशाद्विश्लेषितत्वात् तद्दिदृक्षाभिभूतोऽद्वैतप्रेमभाववादीतस्ततः सर्वत्र च परमात्मानमिव तां संभावनायां पश्यन् स्वयं निध्यायति यत्तस्या विश्लेषव्यथाविमृदितस्य मे तद्व्यतिरिक्ता कापि प्रकृतिरपरा न विद्यते यतः सा प्रकृतिसदृशी मे कान्ता हर्म्येऽपि सा ककुभि ककुभि साग्रतः सा च पृष्ठभागे सा पर्यङ्केऽपि सा मार्गे मार्गे सेहापि सा तत्रापि सा सर्वत्र सा सर्वस्मिन् भुवने च बोभवीति सा च मे मनसि सा मे समस्तेन्द्रियग्रामे सा मे चक्षुषि श्रवणे वदने शरीरे च वरीवर्ति किं पुनः सकलमपि जगत् तया सृष्टमिव तया व्याप्तमिव वितर्क्यत इत्यहो कोऽयं प्रेमतन्मयोऽद्वैतवाद इति ।

इह खलु हृदयदयिताविरहाशुशुक्षणिज्वालाजिह्वालेलिह्यमानान्तःकरणेन सुदृढाबद्धानुरागैकतानमनसा वराकेण विरहिणा यूना परमार्थतोऽद्वैतो निर्द्वन्द्वोऽनुपाधिरनुपमेयः स्नेहो दुर्विगाहात् स्वहृदयकूपाद्यथातत्त्वं प्रादुर्भावित इति स्त्रीललामभूता सा विरहिण्यपि धन्या यामेवमेव निरुपमप्रेमपूर्वं जीवितावस्थासु सर्वास्वपि निर्विकारेण मनसा सदैव स बहुमन्यते, सा च नूनं सुकृतिनी या गाढानुरक्ते तस्मिन्नेवानुरक्ता भवति । पुनरत्र दुर्वहविप्रलम्भविषादमये मन्दाक्रान्तावृत्तयुजि मुक्तकरत्ने योषित एकस्या एकरूपेण युगपदनेकेषु स्थानेषु स्थितिवर्णनासमुत्थेन 'एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा' इति काव्यप्रकाशकारविमृष्टलक्षणोपेतेन विशेषालंकारेण

विशेषत: कान्तावियोगशोककदर्थितस्य तपस्विनोऽतिविशिष्टः प्रेमभावोऽभिव्यज्यते । नन्वित्थंकारं कृत्स्ने जगति सर्वतो व्याप्तां प्रकृतिमिव निजवल्लभामुत्प्रेक्षमाणस्य प्रेमकैवल्यवादिनो वियोगिनो विरहावधिर्यथाशीघ्रं परिसमाप्तिं यदि न यायात् तर्हि न केवलं तस्योन्मादः किन्तु प्राणसंशयोऽपि निःसंशयं समुत्पद्येतेति चिन्ताविह्वलेनातिदयितया स्वप्नेऽपि क्षणमप्यविस्मृतया स्वीयप्रियजन्मभूम्या वर्षदशकमधुनापि विश्लेषितेन कोरियादेशीयेनैनाममरुशतकलीलां निर्विघ्नपरिसमाप्तिमथ नयता प्राञ्जलिना मया सस्नेहमाशिष्यते यच्छ्लाध्यसौजन्यसौहृदयवात्सल्यनिधेर्नराकस्यास्य दयितासमागमोऽविलम्बेन संजनिषीष्ट, शश्वदविभाज्यस्यापि निकृष्टसाम्राज्यवादहतकेनदक्षीणोत्तरभागद्वये बलात्कारेण विभक्तस्य कोरियादेशस्य पुनःसंयोगोऽपि द्रुततरं समुत्पत्सीष्टेति ।

**परिसमाप्ता श्रीयुतकोरियादेशसमुत्पन्नविद्वद्वरेण्य-पण्डितश्रीबाक्कन्बेप्रणीतेयममरुशतकलीला ॥**

# परिशिष्टम्

अथ सुभाषितावल्यादिषु ग्रन्थान्तरेष्वमरुकविनाम्ना समुद्धृतानां पूर्वगतपद्य-व्यतिरिक्तानां श्लोकानां व्याख्यानमपि श्रीबाक्कन्बेनाम्ना **कोरियादेशीयेन** मया सहृदयानां विदुषां मुदे सुबोधाय च लघु विधीयते ।

**नभसि जलदलक्ष्मीं सास्रया वीक्ष्य दृष्ट्या**
**प्रवससि यदि कान्तेत्यर्धमुक्त्वा कथंचित् ।**
**मम पटमवलम्ब्य प्रोल्लिखन्ती धरित्रीं**
**यदनु कृतवती सा तत्र वाचो निवृत्ताः ॥ १ ॥**

विरहिमिथुनपरस्परसमागमोत्कण्ठातिरेकजनिकायां प्रावृषि गगने प्रेक्षणीयां वारिवाहशोभां कान्तवियोगासहिष्णुतयोद्भिद्यमानबाष्पपूर्णया दृष्ट्या सखेदं निरीक्ष्य हे दयित ! प्रवासमनुतिष्ठसि चेदिति कथमप्यर्धं मा गास्त्वमित्याशयेन मे वसनं परिगृह्य पद्भ्यां भूमिं प्रकर्षेणोल्लिखन्ती ततः पश्चात् सा मे दयिता यद्दीनं चेष्टितमकार्षीत्तत्रैवानिर्वचनीये चेष्टिते वचांसि व्यरंसिषुः । अत्र स्वकान्तप्रवासोद्यमनिषेधाय यदि प्रवससि नाहं जिजीविषामीत्यादिकं यद्यद्भाषितुमभिलषितं तत्तत् सर्वं तेनैव चेष्टितविशेषेण तया निःशब्दमुक्तमिति चरमपादेनावगम्यते । स्वभावोक्तिरलंकारः । मालिनीवृत्तम् ।

**स्मररसनदीपूरेणोढाः पुनर्गुरुसेतुभि-**
**र्यदपि विधृतास्तिष्ठन्त्यारादपूर्णमनोरथाः ।**
**तदपि लिखितप्रख्यैरङ्गैः परस्परमुन्मुखा**
**नयननलिनीनालानीतं पिबन्ति रसं प्रियाः ॥ २ ॥**

यद्यपि सावेगमनसिजरागरूपेण नदीप्रवाहेण हठात् प्रोढाः प्रज्वलितकामानल-संधुक्षिताः किन्तु भूयो गुरुजनरूपैः सेतुभिः प्रतिरुद्धाः प्रणयिनः स्त्रीपुरुषाः सुरतक्रीडाया अननुष्ठितत्वादसिद्धमनोभिलाषास्तिष्ठन्ति तथापि चित्रार्पित-कल्पैर्निश्चलैर्गात्रैरत्यन्तौत्सुक्यात् परस्परमुत्सुकाः सन्तो दृष्टीन्दीवरकाण्ड-

समानीतमतिमात्रसमीहितान्योन्यदर्शनपीयूषास्वादमेव निर्विशन्ति । ननु गुरुबन्धुजनसान्निध्ये मान्मथलीलाया अचिन्त्यत्वात् केवलं साभिलाषपरस्परावलोकनेन मदनमदरसं पिबन्ति प्रणयिमिथुनानीत्यर्थः ।
रूपकमलंकारः । हरिणीवृत्तम् ।

**निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो**
**नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।**
**मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे**
**वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ।। ३ ।।**

मादृक्षसुहृज्जनस्याविदितमानसिकव्यथालाभे ! दूतिके ! पश्य ते पीवरवक्षोरुहकुम्भयुगलं निरवशेषविगलितचन्दनावलेपनं, रदनच्छदः प्रमृष्टरक्तवर्णः, नयने दूरीकृतकज्जले, क्षामा तवेयं तनू रोमाञ्चिता बोभवीति, स्थानादस्मात् स्नानं कर्तुं दीर्घिकां यातासि, न तु मदर्थेऽतिदुष्टस्य तस्य कामुकस्य सकाशं गतासि। अत्र खलु वापीस्नानगलितचन्दनादिव्यपदेशेन दूत्याः संभोगचिह्नस्य नायिकया कथितत्वात् स्वीयकामुकस्याधमत्वख्यापनाच्च मत्समीपमानय तमिति मम संदेशवचनमङ्गीकृत्यापि तदन्तिकं रन्तुमयासीरिति व्यङ्ग्योऽर्थः संसूच्यते तेन हेतुना मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागम इति साभ्यसूयामर्षोपालम्भोक्तिः । व्याजोक्तिरलंकार आक्षेपोऽलंकारोऽपि । शार्दूलविक्रीडितवृत्तम् ।

**आयस्ता कलहं पुरेव कुरुते न स्रंसने वाससो**
**भुग्नभ्रूरतिखण्ड्यमानमधरं धत्ते न केशग्रहे ।**
**अङ्गान्यर्पयति स्वयं भवति नो वामा हठालिङ्गने**
**तन्व्या शिक्षित एष संप्रति पुनः कोपप्रकारोऽपरः ।। ४ ।।**

नूनं प्रणयकोपवशात् परिक्लिष्टा वामलोचना मे कामिनी रिरंसातुरेण मया क्रियमाणेंऽशुकस्य विमोचनेऽपि प्रागिव सरोषं विरोधं न करोति, परिचुम्बनार्थं मया विधीयमाने तदीयशिरोरुहकर्षणेऽपि विरचितभ्रूकुटी सत्यतिमात्रदश्यमानमधरोष्ठं न धारयति किंच संभोगतृष्णार्तेन मयानुष्ठीयमानेऽपि सरभसपरिरम्भणे प्रतिकूला न भवति किन्तु हठालिङ्गनसौकर्यायैवात्मनैव गात्राणि मे

समर्पयति खल्वितीत्थमिदानीं भूयोऽयमन्यः क्रोधप्रपञ्चनप्रक्रमस्तन्वङ्ग्या तया किन्नु परिशीलितः? । युक्तिरलंकारः । वृत्तं तु शार्दूलविक्रीडितम् ।

**क्वचित्ताम्बूलाक्तः क्वचिदगरुपङ्काङ्कमलिनः**
**क्वचिच्चूर्णोद्गारी क्वचिदपि च सालक्तकपदः ।**
**वलीभङ्गाभोगैरलकपतितैः शीर्णकुसुमैः**
**स्त्रियो नानावस्थं प्रथयति रतं प्रच्छदपटः ।। ५ ।।**

कुत्रचिन्मार्जारकरणसंज्ञकेन निधुवनप्रकारेण ताम्बूलरसरक्तीकृतः कुत्रचित् करिपदनामकेन सुरतबन्धेन कृष्णागरुकर्दमलाञ्छनकलङ्कितः कुत्रचिद् धेनुकाह्वेन रतिप्रक्रमेण कर्पूरादिसौगन्धिकचूर्णोद्गारचिह्नितः कुत्रचिदपि च पुरुषायितसंभोगविधिना चरणलाक्षारागलक्ष्ममुद्रितो विलासरागप्रच्छदपटो मन्मथयुद्धविमर्दातिशयद्योतकैस्तरङ्गितवलीभङ्गविस्तारैश्च केशपाशविगलितैरितस्ततः समन्ताद्विकीर्णैः पुष्पैश्च प्रज्वलितरागानलपुलकितवपुषो निधुवनप्रमोदोद्रेकद्रवीभूतायाः कस्याश्चिद् योषितो विविधप्रकारमयं सुरतं विवृणोति । जातिरलंकारः । शिखरिणीवृत्तम् ।

**पुष्पोद्भेदमवाप्य केलिशयनाद्दूरस्थया चुम्बने**
**कान्तेन स्फुरिताधरेण निभृतं भ्रूसंज्ञया याचिते ।**
**आच्छाद्य स्मितपूर्णगण्डफलकं चेलाञ्चलेनाननं**
**मन्दान्दोलितकुण्डलस्तबकया तन्व्यावधूतं शिरः ।। ६ ।।**

परिस्पन्दिताधरशालिना दयितेन भ्रूसंज्ञारूपेणेङ्गितेन त्वां परिचुचुम्बिषामीति निःशङ्कं परिचुम्बने प्रार्थिते सति मासिकर्तुवेलाप्रारम्भे रजःप्रभेदं सद्यः प्राप्य मान्मथलीलातल्पं परित्यज्य दूरस्थितयर्तुमत्या स्मितिपरिपूर्णस्मेरकपोलभित्ति वदनकं परिधानप्रान्तेन प्रच्छाद्य शनैर्दरदोलायितकर्णाभरणभूतपुष्पगुच्छया तनुमध्यया दयितयास्मिन् समये नन्वार्तवपुष्पोद्गमवशात् परिचुम्बनमपि कर्तुं न शक्यत इति शीर्षमवधूतम् । सूक्ष्ममलंकारः । शार्दूलविक्रीडितवृत्तम् ।

**शठान्यस्याः काञ्चीमणिरणितमाकर्ण्य सहसा**
**यदाश्लिष्यन्नेव प्रशिथिलभुजग्रन्थिरभवः ।**

**तदेतत्क्वाचक्षे घृतमधुमयत्वद्बहुवचो-**
**विषेणाघूर्णन्ती किमपि न सखी मे गणयति ।।७।।**

हे कितव ! यन्मां समालिङ्गन्नपि त्वमितरस्याः प्रतिपक्षकामिन्या मेखलारत्न-शिञ्जितं कर्णे कृत्वा तद्गतमनस्कत्वाद् विश्लथीभूतबाहुपाशोऽभूस्तदेतत् ते दुर्ललितं कैतवं कुत्र कस्मै निवेदयामि ? विषसदृशेन सर्पिःपुष्पासवमयमिवोपलक्षितं प्रियोक्तिनिपुणस्य ते प्राज्येन वचसा विमुह्यमाना मे सहचरी किमपि न श्रद्धाति । आक्षेपोऽलंकारो रूपकमलंकारश्च । शिखरिणीवृत्तम् ।

**अच्छिन्नं नयनाम्बु बन्धुषु कृतं चिन्ता गुरुष्वर्पिता**
**दत्तं दैन्यमशेषतः परिजने तापः सखीष्वाहितः ।**
**अद्य श्वः परनिर्वृतिं भजति सा श्वासैः परं खिद्यते**
**विस्रब्धो भव विप्रयोगजनितं दुःखं विभक्तं तया ।।८।।**

त्वत्समागमालाभजनितनिर्वेदातिशयमूर्च्छितकल्पया तया निरन्तरनिपतद्बाष्पाम्बु बान्धवजनेषु समर्पितं, चिन्ताभारो गुरुजनेषु निक्षिप्तो, दीनभावः साकल्येन पारिपार्श्वकगणे विश्राणितो, मानसिकसंतापः सहचरीषु निहित इत्थं विश्लेषनिष्पादितं दुःखं तया विभक्तिं प्रापितं किञ्च यतः सा वियोगशोकोत्पादितैर्दीर्घनिःश्वासैः सतरां परिक्लिश्यते ततोऽद्य वा श्वो वाचिरेण परमं सौख्यं लभते, तस्माद्धेतोस्त्वं व्यपेतचिन्तो भव । विरहजमन्युदुःखितां तां योषितं दर्शं दर्शं बन्धवोऽपि निरन्तरनयनाम्बुसंसिक्तदृष्टयो भवन्ति गुरवोऽपि चिन्तातत्परा भवन्ति परिजनोऽपि दैन्यमनुभवति सख्योऽपि तापेन संतातप्यन्ते चेति पूर्वार्धेनात्र संसूच्यते तृतीयापादे चाद्य श्वः परनिर्वृतिं भजति सेत्यनेन वाक्येन तस्या अचिरभावी मृत्युर्व्यज्यते ।
आक्षेपोऽलंकारः । शार्दूलविक्रीडितवृत्तम् ।

**रोहन्तौ प्रथमं ममोरसि तव प्राप्तौ विवृद्धिं स्तनौ**
**संल्लापास्तव वाक्यभङ्गिमिलनान्मौग्ध्यं परं त्याजिताः ।**
**धात्रीकण्ठमपास्य बाहुलतिके कण्ठे तवासञ्जिते**
**निर्दाक्षिण्य करोमि किं नु विशिखाप्येषा न पन्थास्तव ।।९।।**

प्रथमं मम भुजान्तराले रूढिं गच्छन्तौ मामकीनौ वक्षोरुहौ तव भुजान्तराले

परिपोषणं लब्ध्वा वृद्धिं प्राप्तौ, मदीयानि संभाषणानि वक्रोक्तिचतुरस्य ते वाक्यभङ्गिसंपर्कादेव नितरां मुग्धत्वं संत्याजितानि, धात्र्याः शिरोधरं निराकृत्य मम बाहुलतिके तव शिरोधरेऽवलम्बिते स्तः, सदाचारविहीन ! दूरीकृतदाक्षिण्य ! इयं प्रतोल्यपि तव मार्गो न भवतीतीत्थंभूतेऽत्र ननु किं करोमि? आक्षेपोऽलंकारः । वृत्तं तु शार्दूलविक्रीडितम् ।

**पराची कोपेन स्फुटकपटनिद्रामुकुलिता**
**प्रविश्याङ्गेनाङ्ग प्रणयिनि परीरम्भचतुरे ।**
**शनैर्नीविबन्धं स्पृशति सभयव्याकुलकरं**
**विधत्ते संकोचग्लपितमवलग्नं वरतनुः ॥१०॥**

प्रणयकलहप्रसङ्गे रुषा विमुखी सुव्यक्तमृषानिद्रानिमीलिताक्षी वरवर्णिनी संभोगरसास्वादलालसया गात्रेण गात्रं प्रविश्य समाश्लेषकोविदे प्रणयिनि प्राणेश्वरेंऽशुकग्रन्थि सकार्तयविह्वलहस्तं यथा स्यात् तथा विमोचनाय शनैः संस्पृशति सति तदीयाङ्गसंपर्कोत्थरोमहर्षपारवश्यात् तनुमपि मध्यभागं संकोचेन तनूकरोति । युक्तिरलंकारः । शिखरिणीवृत्तम् ।

**स्विन्नं केन मुखं दिवाकरकरैस्ते रागिणी लोचने**
**रोषात्तद्वचनोदिताद्विलुलिता नीलालका बायुना ।**
**भ्रष्टं कुङ्कुममुत्तरीयकषणात् क्लान्तासि गत्यागतै-**
**र्युक्तं तत्सकलं किमत्र वद हे दूति क्षतस्याधरे ॥११॥**

स्वीयकान्तकृतसंभोगचिह्नलाञ्छितां प्रत्यागतां दूतीं विलोक्य विलोक्येर्ष्यामर्षारुणाक्षी नायिका पर्यनुयुङ्क्ते हे संदेशहरि ! केन कारणेन तव वदनं संजातस्वेदोद्गमम् ? सामृषाभाषिणी दूती प्रतिवक्ति सहस्ररश्मिकिरणैः, पुनरपि नायिका पृच्छति केन हेतुना ते दृष्टी रक्तीभूते ? दूती प्रतिवदति तस्य कितवस्यानिष्टवाक्यजनितात् क्रोधात् तथाभूते, नायिकानुयुङ्क्ते कृष्णवर्णस्तव केशपाशः केन विकीर्णः? दूतिका प्रतिभाषते मरुता विकीर्णः, तच्छ्रुत्वा भूयो नायिका पर्यनुयोगं कुरुते काश्मीरजं केन हेतुना विगलितम् ? सा दूती प्रतिवक्ति तदुत्तरीयकसंघर्षेण च्युतम्, नायिका पृच्छति केन खिन्नासि ? सा दूतिका प्रतिभाषतेऽनल्पैर्गमनागमनैः खिन्नास्मीति श्रुत्वा सा रोषिता नायिका व्याहरति

हे दूतिके ! समस्तं यत् त्वया निगदितं तद् युज्यते किन्तु तवाधरे दरीदृश्यमानस्य व्रणाङ्कस्य कि कारणमित्यत्र मे प्रश्ने प्रतिवचनं ब्रूहि । प्रश्नोत्तररूपं वाक्योत्तरमलंकारः । शार्दूलविक्रीडितवृत्तम् ।

**नान्तःप्रवेशमरुणद्विमुखी न चासी-**
**दाचष्टे रोषपरुषाणि न चाक्षराणि ।**
**सा केवलं सरलपक्ष्मभिरक्षिपातैः**
**कान्तं विलोकितवती जननिर्विशेषम् ॥१२॥**

कृतप्रणयापराधस्यापि प्रणयिनो वेश्माभ्यन्तरप्रवेशं सौजन्यविनयविभूषणा सा विदग्धा दयिता न न्यवीवरत्, तं प्रति च पराङमुखी नाभूत्, कोपेन निष्ठुराण्यक्षराणि च न व्याहार्षीत् परन्तु केवलमकुटिलाक्षिरोमशालिभिर्दृष्टिविक्षेपैः साधारणजनवत् स्वं प्रियमद्राक्षीत् । उत्तरार्धेनेह सानुरागवीक्षणराहित्येन सा नायिकात्मनस्ताटस्थ्यं व्यक्तीकृत्य दण्डचं कान्तं शिष्टोपचारपूर्वं दण्डयाञ्चक्र इति व्यज्यते । आक्षेपोऽलंकारः । वृत्तं तु वसन्ततिलका ।

**प्रियकृतपटस्तेयक्रीडाविलम्बनविह्वलां**
**किमपि करुणालापां तन्वीमुदीक्ष्य ससंभ्रमम् ।**
**अपि विगलिते स्कन्धावारे गते सुरताहवे**
**त्रिभुवनमहाधन्वी स्थाने न्यवर्तत मन्मथः ॥१३॥**

मनोहरसंभोगलीलापर्यवसानसमये मान्मथकेलिनिरतेन प्रियतमेन विहितायाः संव्यानांशुकपुनरपहरणक्रीडायाः कालक्षेपेण संजातवैक्लव्यां किमपि किमपि करुणं प्रलपन्तीं वरारोहां निरीक्ष्य सर्वदमनस्त्रिलोकैकवीरमहाधानुष्कः कन्दर्पः पुनरप्येतन्मिथुनस्य महासुरतसंग्रामः प्रारभेतेति मनसि कृत्वा प्राथमिकेऽङ्गभूषणादिमदनविलासोपयोगिसामग्रीरूपे शिबिरे भ्रष्टेऽपि प्रथमनिधुवनयुद्धे समाप्तेऽपि ससंभ्रमं स्थाने स्वस्थाने न्यवर्तिष्टेति । हेतुरलंकारः । हरिणीवृत्तम् ।

**सालक्तकेन नवपल्लवकोमलेन**
**पादेन नूपुरवता मदनालसेन ।**
**यस्ताड्यते दयितया प्रणयापराधा-**
**त्सोऽङ्गीकृतो भगवता मकरध्वजेन ॥१४॥**

लाक्षारागरञ्जितेनाभिनवकिसलयवत्सुकुमारेण मञ्जीरभूषितेनानङ्गराग-मन्थरेण चरणेन स्वस्वकान्तया यो यः प्रेमविषयकापराधादभिहन्यते स स पूज्येन मीनकेतनेन स्वीकृतो भवति । वसन्ततिलकावृत्तम् ।

**प्रयच्छाहारं मे यदि तव रहोवृत्तमखिलं**
**मया वाच्यं वोच्चैरिति गृहशुके जल्पति शनैः ।**
**वधूर्वक्त्रं व्रीडाभरनमितमन्तर्विहसितं**
**हरत्यर्धोन्मीलन्नलिनमनिलावर्जितमिव ।।१५।।**

हे मन्मथविलासप्रसक्ते वरवर्णिनि ! बुभुक्षितोऽस्मि, मह्यं भोजनं देहि, यदि न दास्यसि तर्हि सकलस्ते रहस्यवृत्तान्तो वा मयोच्चैर्व्याहर्तव्यो भविष्यतीति संतर्जयतीव गृहस्थे लीलाशुके मन्दमन्दं प्रलपति सति वधूर्वायुनम्रीकृतमर्ध-विकसत् कमलमिव शुकजल्पिताकर्णनजनितत्रपातिरेकावनमितमन्तर्भरितमन्द-हासं वदनं हरति । उत्प्रेक्षालंकारः । शिखरिणीवृत्तम् ।

**किंचिन्मुद्रितपांसवः शिखिगणैरूर्ध्वाक्षमालोकिता**
**जीर्णावासरुदद्दरिद्रगृहिणीश्वासानिलैर्जर्जराः ।**
**एते ते निपतन्ति नूतनघनात् प्रावृड्भरानन्दिनो**
**विच्छायीकृतविप्रयुक्तवनितावक्त्रेन्दवो बिन्दवः ।।१६।।**

अधोनिपतनेनेषन्निवारितपांशूद्गमाः सानन्दमयूरनिवहैरुद्ग्रीवैरूर्ध्वीकृतनेत्र यथा स्यात् तथोद्वीक्षिता जीर्णेषु निवासवेश्मस्वकिञ्चनतावशाद् रोरुद्यमानानां दरिद्रगेहिनीनामसह्यपीडोत्पादितैर्निश्वासमरुद्भिश्चूर्णीकृताः कान्तविरह-शोकविवर्णीकृतप्रोषितभर्तृकामुखेन्दवो जलदागमप्रमोदिनस्ते एत सलिल-बिन्दवोऽभिनववारिवाहान्निपतन्ति । जातिरलंकारः । वृत्तं तु शार्दूलविक्रीडितम्।

**नीत्वोच्चैर्विक्षिपन्तः कृततुहिनकणासारसङ्गान्परागा-**
**नामोदानन्दितालीनतितरसुरभीन् भूरिशो दिङ्मुखेषु ।**
**एते ते कुंकुमाङ्कस्तनकलशभरास्फारनादुच्छलन्तः**
**पीत्वा सीत्कारि वक्त्रं हरिणशिशुदृशां हैमना वान्ति वाताः ।।१७।।**

विहिततुषारकणवृष्टिसंपातसंपर्कानि परिमलप्रमोदितषट्पदनिकुरम्बानि

प्रकृष्टसौगन्ध्यमयानि सुमनोरजांसि बहुश ऊर्ध्वं नीत्वा सर्वेषु दिशामुखषु सर्वत्र विकिरन्तः काश्मीरजावलिप्तपीनस्तनीकुचकुम्भोच्छ्रायताडनादूर्ध्व चलन्तो मृगशावाक्षीणां वनितानां शैत्यजनितसीत्कृतिमनोहरं वदनं संस्पृश्यैते ते हेमन्तसंभवा गन्धवाहाः प्रवहन्ति । जातिरलंकारः । वृत्तं स्रग्धरा ।

**पीतस्तुषारकिरणो मधुनैव सार्ध-**
**मन्तः प्रविश्य चषकप्रतिबिम्बवर्ती ।**
**मानाकरं मनसि मानवतीजनस्य**
**नूनं बिभेद यदसौ प्रससाद सद्यः ॥१८॥**

मद्यपानभाजने प्रतिबिम्बितः सन् मदिरमदिरयैव सह पीतः कंदर्पमदोद्दीपक-शिशिरदीधितिश्चन्द्रमा अन्तर्मनसि प्रवेशं कृत्वेर्ष्यालुमानिनीजनस्य प्रणय-कोपोत्पत्तिस्थानं नूनं खण्डशश्चिच्छेद यदसौ मानिनीजनः सपदि प्रसन्नतां जगाम । हेतुरलंकारः । वृत्तं तु वसन्ततिलका ।

**ललनालोलधम्मिल्लमल्लिकामोदवासिताः ।**
**वान्ति रात्रौ रतक्लान्तकामिनीसुहृदोऽनिलाः ॥१९॥**

निदाघकाले निशीथिन्यां नितम्बिनीनां चञ्चलेषु संयतकेशोच्चयेषु निहितानां जातिपुष्पाणां सुगन्धिना परिमलेन परिमलिताः संभोगोपमर्दखिन्नानां प्रमदानां रमणीनामङ्गानुकूलत्वात् सुहृद्भूता इव निरूपिता मातरिश्वानो वहन्ति । वृत्तमनुष्टुप् ।

**वान्ति कह्लारसुभगाः सप्तच्छदसुगन्धयः ।**
**वाता नवरतिम्लानवधूसंगममन्थराः ॥२०॥**

शरदि सौगन्धिकाह्लोत्पलपरिमलव्यतिकरहृदिस्पृशः सप्तच्छपुष्पसौगन्ध्य-सुरभयो नूतननिधुवनसंमर्दश्रमपरिक्लिष्टानां नवोढानां वधूनां संपर्केण शनैश्चरा गन्धवाहाः समीरणा वहन्ति । अनुष्टुब्वृत्तम् ।

**रामाणां रमणीयवक्त्रशशिनः स्वेदोदबिन्दुप्लुतो**
**व्यालोलामलकावलीं प्रचलयंश्चुम्बन्नितम्बांशुकम् ।**

**प्रातर्वाति मधौ विकृष्टविकसद्राजीवराजीरजो-**

**जालामोदमनोहरो रतिरसग्लानिं हरन्मारुतः ॥२१॥**

मन्मथसुहृद्भूते वसन्ते सुन्दरीणां मनोज्ञवदनेन्दोः स्वेदजलबिन्दुमिश्रितस्तासां दोलायमानं कुटिलकचहस्तमितस्ततः प्रचालयन् तासां श्रोणिपरिधानवस्त्रं परिचुम्बन् पुनश्च तासां सुरतनिर्वन्धजनितं परिश्रमं दूरीकुर्वन् व्याकृष्ट-विकासस्मेरकमलनिवहपरागपुञ्जपरिमलमनोरमो गन्धवहः पवमानः प्रभाते वहति । रूपकमलंकारः । शार्दूलविक्रीडितवृत्तम् ।

**अङ्गं चन्दनपाण्डु पल्लवमृदुस्ताम्बूलताम्रोऽधरो**

**धारायन्त्रजलाभिषेककलुषे धौताञ्जने लोचने ।**

**अन्तःपुष्पसुगन्धिराजिकबरी सर्वाङ्गलग्नाम्बरं**

**कान्तानां कमनीयतां विदधते ग्रीष्मेऽपराह्णागमे ॥२२॥**

निदाघे संध्याकाले प्रमदानां मलयजगन्धसारलिप्तं गात्रं नवकिसलयकोमल-स्ताम्बूलचर्वणरञ्जितोऽधरपुटो धारायन्त्रचूर्णितसलिलसंपातस्नानकलुषे प्रक्षालितकज्जले नेत्रे मध्यस्थापितसुमनःसौगन्ध्यसुरभिः कबरीभारः सर्वाङ्गप्रसक्तं क्षौमं च तासां रमणीयतां संपादयन्ति । जातिरलंकारः । शार्दूलविक्रीडितवृत्तम् ।

**वरमसौ दिवसो न पुनर्निशा**

**ननु निशैव वरं न पुनर्दिनम् ।**

**उभयमेतदपि व्रजतु क्षयं**

**प्रियतमेन न यत्र समागमः ॥२३॥**

कापि योषिदेका व्याहरति यद्वासरः शोभनो न तु रात्रिरित्येवं श्रुत्वा द्वितीया योषित् स्वमतं प्रकाशयन्ती ब्रूते निश्चयेन रात्रिरेव शोभना न पुनर्वासरस्तदनु तृतीया यथोपरिनिर्दिष्टं भिन्नमतद्वयमुपसंहरन्ती ब्रवीति यत्र वासरे यत्र रात्रौ चानुरक्तेन प्रियतमेन संगमो न भवति तदेतद् द्वयमपि विलयं गच्छत्विति । द्रुतविलम्बितवृत्तम् ।

**मन्दं मुद्रितपांसवः परिपतज्ज्ञातान्धकारा मरु-**

**द्वेगध्वस्तकुटीरकाग्रनिपतच्छिद्रेषु लब्धान्तराः ।**

**कर्मव्यग्रकुटुम्बिनीकुचभरस्वेदच्छिदः प्रावृषः**
**प्रारम्भे मदयन्ति कन्दलदलोल्लासाः पयोबिन्दवः ।।२४।।**

वर्षासमयस्य प्रस्तावे शनैर्निषिद्धभूतलपांसूद्गमाः परितो निपतद्भिर्विततमसः समीरणावेगापहृततृणकुटीराग्रभागविगलद्रन्ध्रेषु प्राप्तावकाशा गृहव्यापारव्याकुलगृहिणीपीवरस्तनकलशस्वेदकणतस्कर्यः कदलीपत्रोल्लासोत्पादिका जलदजलविप्रुषो ग्रैष्मिकसंतापसंतप्तान् जनान् प्रमोदयति । जातिरलंकारः ।शार्दूलविक्रीडितवृत्तम् ।

**इयमसौ तरलायतलोचना**
**गुरुसमुन्नतपीनपयोधरा ।**
**पृथुनितम्बभरालसगामिनी**
**प्रियतमा मम जीवितहारिणी ।।२५।।**

इयमसौ कातर्यलोलदीर्घाक्षी पीवरोच्छ्रितवक्षोरुहभारशोभिनी बृहन्मांसलश्रोणिप्राग्भारमन्थरगजगामिनी प्राणदयिता मम जीवितहारिणी बोभोति । अतिशयोक्तिगर्भस्वभावोक्तिरलंकारः ।

**सालक्तकं शतदलाधिककान्तिरम्यं**
**रात्रौ स्वधामनिकरारुणनूपुराङ्कम् ।**
**क्षिप्तं भृशं कुपितया तरलायताक्ष्या**
**सौभाग्यचिह्नमिव मूर्धि पदं विरेजे ।।२६।।**

अपराधिनो भर्तुः प्रणयभङ्गकुपितया लोलायतनयनया कयाचिन्मानिन्या पादयोः प्रणिपतितस्य तस्य मस्तके निशि भृशं प्रणिहितं लाक्षारागारुणं रक्तोत्पलाधिकशोभारमणीयं स्वकीयकान्तिमयूखच्छायापुञ्जारुणीकृतमञ्जीराङ्कितं चरणं भागधेयोदयलाञ्छनमिव शुशुभे । उत्प्रेक्षालंकारः । वृत्तं तु वसन्ततिलका ।

**श्रुत्वाकस्मान्निशीथे नवघनरसितं विश्लथाङ्गं पतन्त्या**
**शय्याया भूमिपृष्ठे करतलधृतया दुःखितालीजनेन ।**
**सोत्कण्ठं मुक्तकण्ठं कठिनकुचतटोपान्तदीर्णाश्रुबिन्दु**
**स्मृत्वा स्मृत्वा प्रियस्य स्खलितमृदुवचो रुद्यते पान्थवध्वा ।।२७।।**

अकस्मात् तमिस्रायां तमिस्रायां प्रत्यग्रजलदस्तनितध्वनिं श्रवणविषयीकृत्य प्रणयिभर्तृविरहव्यथार्तया दुर्बलत्वाच्छिथिलितगात्रं यथा स्यात्तथा शयनाद्भूतले निपतन्त्यात एव तत्समानदुःखेन सखीजनेन सकरुणं हस्ततलोद्धृतया प्रोषितभर्तृकया प्राणवल्लभस्य स्मारं स्मारं सोत्सुकं प्रमुक्तकण्ठं दृढस्तनाभोगप्रान्तविशीर्णबाष्पबिन्दु गद्गदमृदुलवचनं यथा स्यात्तथातिकरुणं रोरुद्यते । प्रवासविप्रलम्भदुस्सहेऽत्र श्लोके विश्लथाङ्गं सोत्कण्ठं मुक्तकण्ठं कठिनकुचतटोपान्तदीर्णाश्रुबिन्दु स्खलितमृदुवच इति क्रियाविशेषणपञ्चकम् । स्वभावोक्तिरलंकारः । स्रग्धरावृत्तम् ।

**पीतो यतःप्रभृति कामपिपासितेन**
**तस्या मयाधररसः प्रचुरः प्रियायाः ।**
**तृष्णा ततःप्रभृति मे द्विगुणत्वमेति**
**लावण्यमस्ति बहु तत्र किमत्र चित्रम् ।।२८।।**

यतो दिवसात् प्रभृति मनसिजास्वादपिपासाविह्वलेन मया तस्याः कान्तायाः प्रभूतोऽधरस आस्वादितस्ततःप्रभृति मम पिपासा संवर्धमाना द्विगुणतां याति, तत्राधरे भूरि लावण्यं (लवणभावश्च सौन्दर्यं च) वरीवर्तीति किमत्राद्भुतम् ? यथा लवणभूयिष्ठभक्ष्यपेयपदार्थास्वादनेन तृष्णा समधिकतरं संजाजायते तथा लावण्यमयाधरपरिचुम्बनेनापि । अत्र तृष्णाशब्देनापि पिपासा परिचुचुम्बिषा चेति व्यङ्ग्यार्थद्वयं व्यज्यते । श्लेषोऽलंकारः । वसन्ततिलकावृत्तम् ।

**ग्रामेऽस्मिन् पथिकाय पान्थ वसतिर्नैवाधुना दीयते**
**रात्रावत्र विवाहमण्डपतले पान्थः प्रसुप्तो युवा ।**
**तेनोत्थाय खलेन गर्जति घने स्मृत्वा प्रियां तत्कृतं**
**येनाद्यापि करङ्कदण्डपतनाशङ्की जनस्तिष्ठति ।।२९।।**

हेऽध्वनीन ! एतस्मिन् संवसथेऽधुना कस्मैचिदप्यध्वन्याय निवासो नैव दीयते निशीथेऽत्र विवाहमण्डपभूपृष्ठे कश्चिदध्वगस्तरुणो निद्रां गतस्ततः स्तनयित्नौ गर्जति सत्यात्मनो दयितां सोत्कण्ठमनुस्मृत्य तेन पापेन यूना समुत्थाय तदकार्यमनुष्ठितं येन हेतुनात्रत्यो ग्रामीणलोकोऽपगतप्राणकलेवरकरङ्कदण्डपतनमद्याप्याशङ्कमान आस्ते । विषममलंकारः । शार्दूलविक्रीडितवृत्तम् ।

**कान्ते कत्यपि वासराणि गमय त्वं मीलयित्वा दृशौ**
**स्वस्ति स्वस्ति निमीलयामि नयने यावन्न शून्या दिशः ।**
**आयाता वयमागमिष्यसि सुहृद्वर्गस्य भाग्योदयैः**
**संदेशं वद कस्तवाभिलषितस्तीर्थेषु तोयाञ्जलिः ॥३०॥**

अयि प्रियतमे दृष्टी मुकुलयित्वा त्वं धैर्येण कतिपयानि दिनान्यतिवाहय, हे दयित ! स्वस्ति स्वस्ति तेऽस्तु यावत् त्वद्विरहेणाशाः सर्वा न शून्यीभवन्ति तावदधुनैव नेत्रे मुकुलयामि, वयमायाताः, मित्रबन्धुनिवहस्य सौभाग्योदयैस्त्वमागमिष्यसि, संदेशं वद तीर्थेषु कस्तव समीहितो निवापजलाञ्जलिरिति प्रवासप्रयाणोद्यतस्य कान्तस्य विरहासहिष्णुतानिश्चितमरणाभिप्रायया कान्तया सह प्रस्थानसमये कृतं संभाषणम् । आक्षेपोऽलंकारः । वृत्तं तु शार्दूलविक्रीडितम् ।

**कोपस्त्वया हृदि कृतो यदि पङ्कजाक्षि**
**सोऽस्तु प्रियस्तव किमत्र विधेयमन्यत् ।**
**आश्लेषमर्पय मदर्पितपूर्वमुच्चै-**
**र्मह्यं समर्पय मदर्पितचुम्बनं च ॥३१॥**

अयि नीलोत्पलसमानलोचने ! वामनेत्रे ! यदि प्रणयकोपो गूढं विहितस्त्वया तर्हि नाहं तव प्रियः किन्तु स कोप एव दयितवद्धृदये निहितत्वात् तव प्रियो भवतु, किमपरमस्मिन् विषये करणीयमस्ति, न किमपि, यतोऽहमधुना न ते दयितोऽस्मि तत उच्चैर्मया दत्तपूर्वं परिरम्भणं प्रतियच्छ मया च तेऽर्पितपूर्वं परिचुम्बनमपि मे प्रतिदेहि । आक्षेपोऽलंकारः । वसन्ततिलकावृत्तम् ।

**हारो जलार्द्रवसनं नलिनीदलानि**
**प्रालेयशीकरमुचस्तुहिनांशुभासः ।**
**यस्येन्धनानि सरसानि च चन्दनानि**
**निर्वाणमेष्यति कथं स मनोभवाग्निः ॥३२॥**

मनोजन्मजनितसंतापातिशयप्रशमनाय प्रयुज्यमानो मृणालहारोऽपि शीतलसलिलोक्षितांशुकमपि शय्यायां निहितानि सरसीरुहपत्राण्यपि तुषारकणवर्षणशीलाः सुधांशुकिरणा अपि प्रत्यग्ररसार्द्राणि मलयजान्यप्येतानि सर्वाणि

शीतलान्यपि प्रत्युत यस्य कामानलस्यैधांसि भवन्ति सोऽसौ कामानलः कथं निर्वापं यास्यति ? अतिशयोक्तिगर्भविषमालंकारः । वसन्ततिलकावृत्तम् ।

**तन्वी शरत्त्रिपथगा पुलिने कपोले**
**लोले दृशौ रुचिरचञ्चलखञ्जरीटौ ।**
**तद्बन्धनाय सुचिरार्पितसुभ्रुचाप-**
**चाण्डालपाशयुगलाविव शून्यकर्णौ ।।३३।।**

सा कृशाङ्गी शारदीयगङ्गानदीव तस्याः कपालौ सैकत इव तस्यास्तरले नेत्रे रमणीयचञ्चलखञ्जनाह्वपक्षिणाविव तद्दृष्टिरूपविहङ्गमबन्धनाय तस्याश्च कर्णाभरणरहितौ श्रवणौ दीर्घकालधृतसुभ्रुचापमृगयुपाशाविव । उपमालंकारः । वसन्ततिलकावृत्तम् ।

**पादाङ्गुष्ठेन भूमिं किसलयरुचिना सापदेशं लिखन्ती**
**भूयो भूयः क्षिपन्ती मयि सितशबले लोचने लोलतारे ।**
**वक्त्रं ह्रीनम्रमीषत्स्फुरदधरपुटं वाक्यगर्भं दधाना**
**यन्मां नोवाच किंचित्स्थितमपि हृदये मानसं तद्दुनोति ।।३४।।**

प्रणयकोपवशाद् रुचिरपल्लववर्णेन चरणाङ्गुष्ठेन सव्यपदेशं भूतलमुल्लिखन्ती पौनःपुन्येन मयि सितासिते तरलतारे दृशौ विक्षिपन्ती त्रपावनतं दरपरिस्फुर-दोष्ठपुटशोभि वाक्यगर्भितं वदनं दधानापि सा मे कान्ता यत् स्वहृदयस्थमपि विवक्षितमपि किंचिन्मां नावोचत् तन्मे मनो दुःखयति । जातिरलंकारः । वृत्तं स्रग्धरा ।

**ऊरुद्वयं मृगदृशः कदलस्य काण्डौ**
**मध्यं च वेदिरतुलं स्तनयुग्ममस्याः ।**
**लावण्यवारिपरिपूरितशातकुम्भ-**
**कुम्भौ मनोजनृपतेरभिषेचनाय ।।३५।।**

चकितहरिणलोचनायास्तस्या ऊरुयुगलं रम्भायाः काण्डाविवास्या मध्य-भागः परिष्कृतभूमिरिवास्या निरुपमं वक्षोरुहयुगं च सौन्दर्यरूपवारिपरिपूर्णं सौवर्णकलशयुगलमिव मनसिज एव पार्थिवस्तस्याभिषेकाय कल्पते । रूपकोप-मालंकारौ । वृत्तं तु वसन्ततिलका ।

**हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले ।**
**मुक्तानामप्यवस्थेयं के वयं स्मरकिंकराः ।।३६।।**

सौभाग्योदयाद् दिष्टयायं मौक्तिकहारो मृगाक्षीणां सुन्दरीणां कमनीये कुचाभोगे परिवर्तनं करोतीति मौक्तिकानामपीदृशी दशा परन्तु के वयं कंदर्पदासाः कीदृशी वास्माकमवस्था ? । अनुष्टुब्वृत्तम् ।

**अन्योन्यग्रथितारुणाङ्गुलिनमत्पाणिद्वयस्योपरि**
**न्यस्योच्छ्वासविकम्पिताधरदलं निर्वेदशून्यं मुखम् ।**
**आमीलन्नयनान्तवान्तसलिलं श्लाघ्यस्य निन्द्यस्य वा**
**कस्येदं दृढसौहृदं प्रतिदिनं दीनं त्वया स्मर्यते ।।३७।।**

परस्परगुम्फितरक्ताङ्गुलिनम्रकरयुग्मस्योपरि दीर्घनिःश्वासतरलिताधरपल्लवशालि दौर्मनस्येन शून्यं समन्तान्मुकुलितदृष्टिप्रान्तोद्गतबाष्पाम्बुसंसिक्तं वदनकं निधाय प्रशंसनीयस्योताहोस्विन्निन्दनीयस्य कस्येदं दृढाबद्धमनुरागं प्रतिदिवसं सन्दैन्यं त्वं स्मरसि हे सखि ! जातिरलंकारः । शार्दूलविक्रीडितवृत्तम् ।

**असद्वृत्तो नायं न च खलु गुणैरेष रहितः**
**प्रियो मुक्ताहारस्तव चरणमूले निपतितः ।**
**गृहाणेमं मुग्धे व्रजतु निजकण्ठप्रणयिता-**
**मुपायो नास्त्यन्यस्तव हृदयसंतापशमने ।।३८।।**

मुक्ताहारपक्षे––अयं मुक्ताहारो न विषमो न च खलु तन्तुभिर्विवर्जितस्तव पादमूले विगलितोऽयि मुग्धे ! प्रेक्षणीयमेनं मुक्ताहारं हस्ते कुरु तदनु सोऽयं त्वदीयकण्ठप्रसक्तिं गच्छत्विति, कामुकपक्षे तु––सदाचारोपेतः सद्गुणभूषितश्चायं ते प्रियतम आहरवृत्तिमपि त्यक्त्वा त्वामनुनिनीषुः खलु पादयोः प्रणिपतितो हे मूढे ! एनमनुगृहाण तदनन्तरमयं त्वत्कण्ठाश्लेषं यथातृप्ति करोति यतः प्रणयकलहकुपितायास्ते मानसिकव्यथानिर्वापणविषये न कोपि विद्यतेऽपर उपायः । श्लेषोऽलंकारः । वृत्तं शिखरिणी ।

**आलोकयति पयोधरमुपमन्दिरमभिनवाम्बुभरनीलम् ।**
**दयितारचितचितानलधूमोद्गमशङ्कया पथिकः ।।३९।।**

गृहं समया कश्चिदध्वनीनः कुक्षिधृतप्रत्यग्रवारिभारश्यामं वारिवाहं कान्तया दुर्विषहविरहाग्निदग्धप्रायं स्वदेहं भस्मसात्कर्तुं नूनं निर्मितायाश्चित्याया अग्निधूमोद्गमाशङ्कया सशोकं निरीक्षते । आर्याजातिः । संदेहोऽलंकारः ।

**आश्लिष्टा रभसाद्विलीयत इवाक्रान्ताप्यनङ्गेन या**
**यस्याः कृत्रिमचण्डवस्तुकरणाकूतेषु खिन्नं मनः ।**
**कोऽयं काहमिति प्रवृत्तसुरता जानाति या नान्तरं**
**रन्तुः सा रमणी स एव रमणः शेषौ तु जायापती ।।४०।।**

सुरतलीलाप्रसङ्गेऽनङ्गेन मनसिजेनाक्रान्तापि हठात्कान्तेनालिङ्गिता सती विलीनेव यस्या मनः कपटचण्डवस्तुकरणाभिप्रायेषु दूनं भवति या च प्रवृत्त-निधुवना सती मनोविमोहिसुरतमदोन्मत्तचित्ततया कोऽयं काहमिति रन्तु-स्तारतम्यं न जानीते, तदनु सैव कामिनी स एव कामी शेषौ तु दम्पती । जाति-रलंकारः । शार्दूलविक्रीडितवृत्तम् ।

**किं बाले मुग्धतेयं प्रकृतिरियमथो रोद्रता किं नु कोपः**
**किं वा चापल्यमुच्चैर्व्रतमुत किमु ते यौवनारम्भदर्पः ।**
**यत्केशालापवक्त्रस्मितललितकुचभ्रूविलासावलग्नैः**
**स्वस्थो लोकस्त्वदीयैर्मनसि विनिहितैर्दह्यतेऽमीभिरार्यः ।।४१।।**

कश्चिद्युवा यौवनदर्पप्रतिपन्नां सौंदर्यलहरीरूपिणीं काचित्तरुणीं दृष्टिगोचरी-कृत्य ब्रवीति हे यूनि ! किमिदं ते मौग्ध्यमथवायं निसर्गः किमुतायं रौद्रभावः किन्वमर्ष उताहोस्विच्चाचल्यं किन्नून्नतो नियमः किमुत तारुण्यप्रारम्भमदो यच्छिरोरुहपाशभाषणवदनस्मितिविलसितस्तनभ्रूविलासेष्ववलग्नैश्चेतसि स्थापितैर्मौग्ध्यादिभिस्तावकीनैरमीभिः स्वस्थोऽपि सर्व आर्यो जनो दन्दह्यते । वृत्तं स्रग्धरा ।

**गच्छेत्युन्नतया भ्रूवैव गदितं मन्दं वलन्त्या तया**
**तेनाप्यञ्चितलोचनद्वयपुटेनाज्ञा गृहीता शनैः ।**
**संकेताय वलद्दृशा पिशुनिता ज्ञाता च दिक्प्रेयसा**
**गूढः संगमनिश्चयो गुरुपुरोप्येवं युवभ्यां कृतः ।।४२।।**

निजकान्तसंभोगलालसयोन्नमितेन भ्रूचापेन तत्र याहीति शनैः परिवर्तमानया

तया कामिन्या निःशब्दमेव व्याहृतं, वक्रीकृतनयनयुग्मपुटेन तेनापि कामिनी तादृशी तदीयाज्ञा शनकैरङ्गीकृता, संकेतार्थं परिवर्तमाननेत्रया तया संकेतस्थानं सूचितं तेनापि चावगतमित्थं गुरुजनसान्निध्येऽपि निगूढः पारस्परिकसमागमाध्यवसायस्ताभ्यां तरुणदंपतिभ्यां विहितः । सूक्ष्ममलंकारः । शार्दूलविक्रीडितवृत्तम् ।

**चटुलनयने शून्या दृष्टिः कृता खलु केन ते**
**क इह सुकृती द्रष्टव्यानामुवाह धुरं पराम् ।**
**यमभिलिखितप्रख्यैरङ्गैर्न मुञ्चसि चेतसा**
**वदनकमलं पाणौ कृत्वा निमीलितलोचना ।।४३।।**

अयि तरलनेत्रे! ते दृष्टिः केन खलु शून्यीकृता? कः सुभगः पुण्यराशिस्त्वत्कृते द्रष्टव्यानां पदार्थानां परा धुरमुवाह? कः प्रेक्षणीयतायाः परां कोटिमधिरुरोह यं चित्रार्पितकल्पैर्गात्रैर्मनसा मुखारविन्दं हस्ते निधाय मुकुलितदृष्टिस्त्वं न त्यजसि? । जातिरलंकारः । हरिणीवृत्तम् ।

**चलतु तरला धृष्टा दृष्टिः खला सखि मेखला**
**स्खलतु कुचयोरुत्कम्पान्मे विदीर्यतु कञ्चुकम् ।**
**तदपि न मया संभाव्योऽसौ पुनर्दयितः शठः**
**स्फुटति हृदयं मानेनान्तर्न मे यदि तत्क्षणम् ।।४४।।**

प्रणयकोपादपराधिनं प्रियमुद्दिश्य सरोषं काचिद्योषिदाह हे सहचरि! लोला प्रगल्भा मे दृष्टिर्वलतां निकृष्टः काञ्चीगुणो विगलतु स्तनयोर्वेपथुवशादुत्तरीयं शतधा विदलतु तथाप्यसौ धूर्तरूपो वल्लभो न पुनर्मया संभाव्यो यद्यपि तत्क्षणमेवामर्षेणान्तर्मम हृदयं न स्फुटति । आक्षेपोऽलंकारः । हरिणीवृत्तम् ।

**तैस्तैश्चाटुभिराज्ञया किल तया वृत्ते रतिव्यत्यये**
**लज्जामन्थरया तया निवसिते भ्रान्त्या मदीयांशुके ।**
**तत्पट्टांशुकमुद्वहन्नहमपि स्थित्वा यदुक्तोऽधुना**
**वेषो युज्यत एष एव हि तवेत्येतन्न विस्मर्यते ।।४५।।**

तैस्तैश्चाटूक्तिशतैरादेशेन खलु तया पुरुषायितनिधुवने प्रवृत्ते सति त्रपालसया तयात्मानं पुरुषं मत्वा भ्रान्त्या मामकीने वसने परिहिते सति स्थित्वाहमपि

तस्याः परिधानमुद्धरन् यत् तयाधुनायमेव वेषस्तेऽनुरूप इति निगदितोऽभूवं तदानीं तदेतद् विस्मर्तुं न शक्यते मया । जातिरलंकारः । शार्दूलविक्रीडितवृत्तम् ।

**पत्रं न श्रवणेऽस्ति बाष्पगुरुणोर्नो नेत्रयोः कज्जलं**
**रागः पूर्वमिवाधरे चरणयोस्तन्व्या न चालक्तकः ।**
**वार्तोच्छित्तिषु निष्ठुरेति भवता मिथ्यैव संभाव्यते**
**सा लेखं लिखतु च्युतोपकरणा न्यायेन केनाधुना ।।४६।।**

त्वद्विरहव्यथामनुभवन्त्यास्तस्याः कृशाङ्ग्याः कर्णे पत्राभरणं न विद्यतेऽश्रुभरितयोर्लोचनयोरञ्जनं न भवति यथापूर्वमधरपल्लवेऽपि रक्तवर्णो नास्ति चरणयोश्चापि लाक्षारागो न दृश्यते तथापि वृत्तान्तप्रेषणविरामेषु सत्सु सा निर्दयेति त्वयावधार्यते, त्वद्वियोगदूरीकृतोपकरणसामग्री सा रमणी केन विधिना संप्रति ते पत्रं लिखतु? ।
जातिरलंकारः । शार्दूलविक्रीडितवृत्तम् ।

**यदि विनिहिता शून्या दृष्टिः किमु स्थिरकौतुका**
**यदि विरचितो मौने यत्नः किमु स्फुरितोऽधरः ।**
**यदि नियमितं ध्याने चेतः कथं पुलकोद्गमः**
**कृतमभिनयैर्दृष्टो मानः प्रसीद विमुच्यताम् ।।४७।।**

कश्चिद्रमणः प्रणयकुपितां स्वरमणीं दृष्ट्वानुनिनीषुरभिदधाति हे कोपने! शून्या दृष्टिस्त्वया विक्षिप्ता चेत् किमिति दृढौत्सुक्या भवसि? वाचंयमत्वे त्वया प्रयत्नः कृतश्चेत् किमित्यधरः परिस्फुरितः? ध्याने मनस्त्वया नियमितं चेत्तर्हि कथं शरीरे रोमोद्भेदः ? कृत्रिमकोपभावव्यञ्जकैर्नटितैरलम्, मयि प्रसन्नतां भजस्व, मया साक्षात्कृतोऽमर्षः परित्यज्यतामिति । आक्षेपोऽलंकारः । हरिणीवृत्तम् ।

यद्रात्रौ रहसि व्यपेतविनयं वृत्तं रसात्कामिनो-
रन्योन्यं शयनीयमीहितरसावाप्तिप्रवृत्तस्पृहम् ।
तत्सानन्दमिलद्दृशोः कथमपि स्मृत्वा गुरूणां पुरो
हासोद्भेदनिरोधमन्थरमिलत्तारं कथंचित्स्थितम् ।।४८।।

यदेकान्ते ह्यस्तन्यां क्षणदायां मदनरागोद्रेकवशात् परस्परं समभिलषितमनोहर-सुरतरसलाभार्थसंजाततृष्णं समुल्लङ्घितविनयमर्यादं प्रवृत्तमतिहृद्यं कामिमिथुनस्य मान्मथलीलाशयनीयं तत् सहर्षोन्योन्यमिलन्नेत्रस्य मिथुनस्य स्मृत्वा गुरुजनसमक्षं कथमपि स्मितिप्रादुर्भावप्रतिषेधान्मन्दमिलत्कनीनिकं यथा स्यात् तथा कृच्छ्राद् विरतम् । तरुणदंपतिभ्यां निशि रागातिशयसरभसप्रवृत्तं मैथुनं स्मारं स्मारं तत्स्मरणप्रमोदाज्जायमानो हासोद्गमादिबाह्यानुभावो गुरुजन-सन्निकर्षे कथंचिन्निरुद्ध इति भावः । स्वभावोक्तिरलंकारः । शार्दूलविक्रीडित-वृत्तम् ।

**याते गोत्रविपर्यये श्रुतिपथं शय्यागतायाश्चिरं**
**निर्ध्यातं परिवर्तनं हृदि पुनः प्रारब्धमङ्कृतम् ।**
**भूयस्तत्प्रकृतं कृतं च वलितक्षिप्तैकदोर्लेखया**
**मानिन्या न तु पारितः स्तनभरो नेतुं प्रियस्योरसः ॥४९॥**

प्रियेण कृते प्रतिपक्षरमणीगोत्रस्खलिते शयनस्थाया दयिताया: श्रवणविषये निपतिते सति कोपान्मनसि चिन्तितं भूयः प्रारब्धमङ्गपरिवर्तनं स्वीकृतं भूयश्च तत् प्रकृतं परिवर्तितप्रक्षिप्तैकबाहुपाशेन तेन कृतम्, तया कोपनया तु प्रियस्य भुजान्तरालात् स्वकीयकुचकुम्भयुगलमपनेतुं नाशक्यत । शार्दूल-विक्रीडितवृत्तम् ।

**सा यौवनमदोन्मत्ता वयमस्वस्थचेतसः ।**
**तस्या लावण्यमङ्गेषु दाहोऽस्मासु विजृम्भते ॥५०॥**

सा तारुण्यारम्भमदर्दपिता, तथाभूतां तां निशाम्य वयमधीरमनसो भवामस्त-स्याश्चाङ्गेषु सौन्दर्यं विजृम्भते किन्तु तदलब्धिजनितो महान् संतापोऽस्मासु समुत्पद्यतेतराम् ।

**सति प्रदीपे सत्यग्नौ सत्सु तारामणीन्दुषु ।**
**विरामे मृगशावाक्ष्यास्तमोभूतमिदं जगत् ॥५१॥**

प्रभास्वरे प्रदीपे सत्यपि प्रज्वलितेऽनले विद्यमानेऽपि जाज्वल्यमानेषु तारा-नक्षत्ररत्नचन्द्रेषु सत्स्वपि हरिणशिशुलोचनायास्तस्या मरणे भुवनमिदं खल्वन्धीभूतम् । असंगतिरलंकारः । अनुष्टुब्वृत्तम् ।

**सुरतविरतौ व्रीडावेशश्रमश्लथहस्तया**
**रहसि गलितं तन्व्या प्राप्तुं न पारितमंशुकम् ।**
**रतिरसजडैरङ्गैरङ्गं पिधातुमशक्तया**
**प्रियतमतनौ सर्वाङ्गीणं प्रविष्टमधृष्टया ।।५२।।**

मदनक्रीडापर्यवसाने लज्जाभिनिवेशपरिखेदशिथिलहस्तया कृशाङ्ग्योपांशु विगलितं वस्त्रं हस्ते प्राप्तुं न शक्तं ततो मन्मथरसजडीभूतैर्गात्रैर्गात्रं प्रच्छादयितुमसमर्थया तया प्रियतमस्य शरीरे सर्वाङ्गीणं प्रविष्टम् ।
जातिरलंकारः । हरिणीवृत्तम् ।

**सख्यस्तानि वचांसि यानि बहुशोऽधीतानि युष्मन्मुखा-**
**द्वक्ष्येऽहं बहुशिक्षिता क्षणमिति ध्यात्वापि मौनं श्रिता ।**
**धूर्तेनैत्य च मण्डलीकृतकुचं गाढं परिष्वज्य मां**
**पीतान्येव सहाधरेण हसता वक्त्रस्थितान्येव मे ।।५३।।**

कृतप्रणयापराधं प्रियमुद्दिश्य मानं प्रकाशयितुं प्रौढसखीभिः शिक्षितापि तथाकर्तुमशक्ता काचिद्योषिद्वदति हे वयस्याः! यानि वाक्यानि यौष्माकीणमुखादनुवारमभ्यस्तानि तानि वहुशिक्षिताहं वक्ष्यामीति मुहूर्तं विचिन्त्यापि वाचंयमतामाश्रिता, तदानीं च दयितेन कितवेनागत्य वर्तुलीकृतस्तनकुम्भं यथा स्यात् तथा सुदृढं मामालिङ्ग्य हसता तेन मन्मुखस्थानि तान्येव वाक्यानि मदीयाधरेण सार्धं सम्यक् पीतानीति । जातिरलंकारः । शार्दूलविक्रीडितवृत्तम् ।

**उत्कम्पो हृदये स्खलन्ति वचनान्यावेगलोलं मनो**
**गात्रं सीदति चक्षुरश्रुकलुषं चिन्ता मुखं शुष्यति ।**
**यस्यैषा सखि पूर्वरङ्गरचना मानः स मुक्तो मया**
**वन्द्यास्ता अपि योषितः क्षितितले यासामयं संमतः ।।५४।।**

मानप्रपञ्चे सामर्थ्यरहिता काचिद् यूनी सखीमभिदधाति हे सखि ! मे हृदि वेपथुः संजायते वचांसि स्खलन्ति मनः संक्षोभतरलं भवत्यङ्गमवसीदति दृष्टियुगलं बाष्पाम्बुपङ्किलं भवति चिन्ता वदनं शोषयति (अथवा चिन्ता निरन्तरमेव संजायते वदनं शुष्यति) इत्येवं यस्य मानस्येयमीदृशी पूर्वरङ्गरचना स मानो मया परित्यक्तोऽत एव विचारयामि यत्तास्ता युवतयोऽपि नमस्या बोभवन्ति

यासां मानो भूतले बहुमतो वरीवर्तीति । जातिरलंकारः । शार्दूल विक्रीडितम् ।

**मानव्याधिनिपीडिताहमधुना शक्नोमि तस्यान्तिकं**
**नो गन्तुं न सखीजनोऽस्ति चतुरो यो मां बलान्नेष्यति ।**
**मानी सोऽपि जनो न लाघवभयादभ्येति मातः स्वयं**
**कालो याति चलं च जीवितमिति क्षुण्णं मनश्चिन्तया ।।५५।।**

हेऽम्ब! प्रणयकोपरूपेण रोगेण मृदिताहमिदानीं तस्य समीपं गन्तुं न पारयामि, मादृक्षविघटितजनघटनानिपुणः सखीवर्गोऽपि नास्ति यो मां तस्य सकाशं बलात्कारेणापि नेष्यति, सोऽपि मे दयितो मानग्रस्तः सन् लाघवभयात् स्वयं मत्समीपं नागच्छति, कालश्च गच्छति जीवितमपि च भङ्गुरमिति मे मनश्चिन्तासन्तानेन विदलति ।
सरूपकहेतुरलंकारः । शार्दूलविक्रीडितवृत्तम् ।

**कान्ते कथंचिद्गदितप्रयाणे क्षणं विनम्रा विरहार्द्रिताङ्गी ।**
**ततस्तमालोक्य कदा गतोऽसीत्यालिङ्ग्य मुग्धा मुदमाससाद ।।५६।।**

प्रवासाय जनपदान्तरं गच्छामीति प्रियतमे कथमपि व्याहृतप्रस्थाननिश्चये सति मुहूर्तमधोमुखी भाविवियोगशोकमृदिततनुर्मुग्धा ततस्तं निशाम्य कदा गतोऽसीति परिष्वज्य प्रमोदं लेभे । स्वभावोक्तिरलंकारः । उपजातिः ।

**यद्गम्यं गुरुगौरवस्य सुहृदो यस्मिल्लभन्तेऽन्तरं**
**यद्दाक्षिण्यवशाद्भयाच्च सहते मन्दोपचारानपि ।**
**यल्लज्जां निरुणद्धि यत्र शपथैरुत्पाद्यते प्रत्यय-**
**स्तत्किं प्रेम स उच्यते परिचयस्तत्रापि मानेन किम् ।।५७।।**

यत् प्रेम गुरुगौरवस्य गम्यं यस्मिन् प्रेम्णि मित्राण्यवकाशं प्राप्नुवन्ति यत् प्रेम विनयवशाद्भीतिवशाच्च लघूपचारान्नपि क्षमते यत् प्रेम त्रपां नियमयति यत्र प्रेम्णि प्रत्ययः शपनैः समुत्पाद्यते तत् प्रेम किं परिचय उच्यते तत्रापि मानेन किं कार्यम् ।। शार्दूलविक्रीडितवृत्तम् ।

**दृष्टे लोचनवन्मनाङमुकुलितं पार्श्वस्थिते वक्त्रव-**
**न्न्यग्भूतं बहिरासितं पुलकवत् स्पर्शं समातन्वति ।**

**नीवीबन्धवदागतं शिथिलतां संभाषमाणे क्षणा-**
**न्मानेनापसृतं ह्रियेव सुदृशः पादस्पृशि प्रेयसि ॥५८॥**

सापराधे प्रियतमेऽवलोकिते सति मानेन नेत्रवद्द्रनिमीलितं तस्मिन् पार्श्वस्थिते सति मानेन वदनवन्नम्रीभूतं तस्मिन् स्पृशति सति मानेन रोमाञ्चवद्बहिःस्थितं तस्मिन् वदति सति मानेन वस्त्रग्रन्थिवच्छिथिलीभूतं तस्मिंश्चानुनिनीषय चरणस्पृशि सति निमेषाल्लज्जावशादिव तस्याः सुन्दर्या मानेनादृश्यतां गतम् । उत्प्रेक्षास्वभावोक्तिरलंकारौ । वृत्तं तु शार्दूलविक्रीडितम् ।

**ललितमुरसा तरन्ती तरलतरङ्गौघचालितनितम्बा ।**
**विपरीतरतासक्तेव दृश्यते सरसि सा सख्या ॥५९॥**

सलीलं वक्षसा सरोवरं तरन्ती तरलितोर्मिसंघातपरिचालितश्रोणिफलका सा पुरुषायितसुरतप्रसक्तेव तत्र सरोवरे वयस्यया निरीक्ष्यते । उत्प्रेक्षालंकारः । आर्यजातिः ।

**कान्तामुखं सुरतकेलिविमर्दखेद-**
**संजातघर्मकणविच्छुरितं रतान्ते ।**
**आपाण्डुरं विलसदर्धनिमीलिताक्षं**
**संस्मृत्य हे हृदय किं शतधा न यासि ॥६०॥**

हे कठिनहृदय! मन्मथयुद्धोपमर्दश्रमसंजातैः स्वेदबिन्दुभिर्भरितं सुरतावसाने दरपाण्डु विकसदर्धमुकुलितलोचनशोभि दयिताया वदनमनुस्मृत्यापि शतधा किं न विदलसीति कस्यचिद्विरहिणः सखेदोक्तिरियम् ।
वसन्ततिलकावृत्तम् ।

**गन्तव्यं यदि नाम निश्चितमहो गन्तासि केयं त्वरा**
**द्वित्राण्येव पदानि तिष्ठतु भवान् पश्यामि यावन्मुखम् ।**
**संसारे घटिकाप्रणालविगलद्वारा समे जीविते**
**को जानाति पुनस्त्वया सह मम स्याद्वा न वा संगमः ॥६१॥**

कान्तविरहासहिष्णुः काचिद् वरवर्णिनी सद्यः प्रतिष्ठमानं तमभिदधाति हे हृदयवल्लभ! त्वया यदि नाम यातव्यं स्यादहो ! निःसंशयं गमिष्यसि, केयं

गमने त्वरा? तावत् कतिपयान्येव पदानि त्वं तिष्ठ यावदहं यथातृप्ति तवाननमवलोकयामि, असारे जीवलोके घटिकाप्रणालात् पतता वारिणा समाने जीवने त्वया सह मम पुनः समागमो भवेन्न वेति को वेत्तीति । प्रयाणनिषेधात्मय आक्षेपोऽलंकारः । शार्दूलविक्रीडितवृत्तम् ।

**। इति समाप्तं परिशिष्टम् ।**

# श्लोकानुक्रमणी


| श्लोकारम्भः | श्लोकाङ्कः |
|---|---|
| **( अ )** | |
| अङ्गं चन्दनपाण्डु | परिशिष्टे २२ |
| अङ्गानामतितानवं | ४८ |
| अङ्गुल्यग्रनखेन | ३ |
| अच्छिन्नं नयनाम्बु | परिशिष्टे ८ |
| अज्ञानेन पराङ्मुखीं | १५ |
| अद्यारभ्य यदि | ९१ |
| अनन्तचिन्ता | ६३ |
| अनालोच्य प्रेम्णः | ७८ |
| अन्योन्यग्रथिता | परिशिष्टे ३७ |
| अलसवलितैः | २ |
| असद्वृत्तो नायं | परिशिष्टे ३८ |
| अहं तेनाहूता | ९६ |
| आदृष्टिप्रसरात् | ७४ |
| **( अ )** | |
| आयस्ता कलहं | परिशिष्टे ४ |
| आयाते दयिते | ७५ |
| आलम्ब्याङ्गण | ७६ |
| आलोकयति | परिशिष्टे ३९ |
| आलोलामलका | १ |
| आशङ्क्य प्रणतिं | ४५ |
| आश्लिष्टा रभसा | परिशिष्टे ४० |
| आस्तां विश्वसनं | ६१ |
| **( इ )** | |
| इति प्रिये | ६४ |
| इदं कृष्णं कृष्णं | ९२ |
| इयमसौ तरला | परिशिष्टे २५ |
| **( उ )** | |
| उत्कम्पौ हृदये | परिशिष्टे ५४ |
| उरसि निहित | २९ |
| **( ऊ )** | |
| ऊरुद्वयं मृगदृश | परिशिष्टे ३५ |
| **( ए )** | |
| एकत्रासनसंस्थिति | १६ |
| एकस्मिन् शयने पराङ्मुख | २१ |
| एकस्मिञ्शयने विपक्ष | २० |
| **( क )** | |
| कठिनहृदये | ५१ |
| कथमपि कृते | ७३ |
| कथमपि सखि | १३ |
| कपोले पत्राली | ७९ |
| करकिसलयं | ८८ |
| काञ्च्या गाढतरा | १९ |
| कान्तामुखं सुरत | परिशिष्टे ६० |
| कान्ते कत्यपि | परिशिष्टे ३० |
| कान्ते कथंचिद्र | परिशिष्टे ५६ |

कान्ते तल्पमुपागते ९९
कान्ते सागसि ४४
किंचिन्मुद्रितपांसवः परिशिष्टे १६
किं बाले मुग्धतेयं परिशिष्टे ४१
कुतो दूरादेव १२
कोपस्त्वया यदि परिशिष्टे ३१
कोपात्कोमल ७
कोपो यत्र भ्रुकुटि ३६
क्वचित्ताम्बूलाक्तः परिशिष्टे ५
क्व प्रस्थितासि ६९
क्षिप्तो हस्तावलग्नः प्रारम्भे

( ग )

गच्छेत्युन्नतया परिशिष्टे ४२
गते प्रेमाबन्धे ४१
गन्तव्यं यदि नाम परिशिष्टे ६१
गाढालिङ्गनवामनी ३८
गाढाश्लेषविशीर्ण ७२
ग्रामेऽस्मिन्पथिकाय परिशिष्टे २९

( च )

चक्षुःप्रीतिप्रसक्ते ९८
चटुलनयने परिशिष्टे ४३
चपलहृदये ५४
चरणपतनं सख्या ९३
चरणपतनप्रत्याख्यान १८
चलतु तरला परिशिष्टे ४४
चिन्तामोह ८५
चिरविरहिणो ४२

( ज )

जात नोत्कलिका ८२
ज्याकृष्टिबद्ध प्रारम्भे

( त )

ततश्चाभिज्ञाय ५०
तथाभूदस्माकं ६७
तद्वक्त्राभिमुखं ९
तन्वङ्ग्या गुरु ९४
तन्वी शरत्त्रिपथगा परिशिष्टे ३३
तप्ते महाविरह ८४
तस्याः सान्द्रविलेपन २४
तैस्तैश्चाटुभि परिशिष्टे ४५
त्वं मुग्धाक्षि २५

( द )

दंपत्योर्निशि १४
दत्तोऽस्याः प्रणयः ४
दीर्घा चन्दनमालिका ४३
दूरादुत्सुकमागते ४७
दृष्टः कातरनेत्रया ८३
दृष्टे लोचनवन्मनाङ परिशिष्टे ५८
दृष्ट्वैकासनसंस्थिते १७
देशैरन्तरिता ९७

( ध )

धीरं वारिधरस्य ११

( न )

न जाने संमुखा ६२
नभसि जलदलक्ष्मी परिशिष्टे १
नान्तःप्रवेश परिशिष्टे १२
नापेतोऽनुनयेन ४०
नार्यो मुग्धशठा ६
निःशेषच्युतचन्दनं परिशिष्टे ३

निःश्वासा हृदयं ९०
नीत्वोच्चैर्विक्षिपन्तः परिशिष्टे १७

( प )

पटालग्ने पत्यौ ३९
पत्रं न श्रवणेऽस्ति परिशिष्टे ४६
पराची कोपेन परिशिष्टे १०
परिम्लाने माने २३
पश्यामो मयि २२
पादाङ्गुष्ठेन भूमिं परिशिष्टे ३४
पादासक्ते सुचिर ६६
पीतस्तुषारकिरणो परिशिष्टे १८
पीतो यतः प्रभृति परिशिष्टे २८
पुरस्तन्व्या गोत्र ४९
पुष्पोद्भेदमवाप्य परिशिष्टे ६
प्रयच्छाहारं परिशिष्टे १५
प्रस्थानं वलयैः ३३
प्रहरविरतौ १०
प्रातःप्रातरुपागतेन ३१
प्रासादे सा दिशि १००
प्रियकृतपटस्तेय परिशिष्टे १३

( ब )

बाले नाथ विमुञ्च ५५

( भ )

भवतु विदितं २८
भ्रूभङ्गे रचितेऽपि २६
भ्रूभेदो गुणितः ९५

( म )

मन्दं मुद्रितपांसवः परिशिष्टे २५
मलयमरुतां ३०
मानव्याधि परिशिष्टे ५५
मुग्धे मुग्धतयैव ६८
म्लानं पाण्डुकृशां ८६

( य )

यदि विनिहिता परिशिष्टे ४७
यद्गम्यं गुरु परिशिष्टे ५७
यद्रात्रौ रहसि परिशिष्टे ४८
याताः किं न मिलन्ति ८
याते गोत्रविपर्यये परिशिष्टे ४९
यावन्त्येव पदा ४६
यास्यामीति समु ७७

( र )

रात्रौ वारिभरा ५२
रामाणां रमणीय परिशिष्टे २१
रोहन्तौ प्रथमं परिशिष्टे ९

( ल )

ललनालोल परिशिष्टे १९
ललितमुरसा परिशिष्टे ५९
लग्ना नांशुक ६०
लाक्षालक्ष्म ललाट ५८
लिखन्नास्ते भूमिं ५
लीलातामरसाहतो ७०
लोलद्भूलतया ८१
लोलैर्लोचनवारिभिः ५९

( व )

वरमसौ दिवसो परिशिष्टे २३

वान्ति कह्लार परिशिष्टे २०
विरहविषमः ६५

( श )

शठान्यस्याः कांची परिशिष्टे ७
शून्यं वासगृहं
श्रुत्वाकस्मान्निशीथे परिशिष्टे २७
श्रुत्वा नामापि ५७
श्लिष्टः कण्ठे ५६

( स )

संदष्टेऽधरपल्लवे ३४
सख्यस्तानि परिशिष्टे ५३
सति प्रदीपे परिशिष्टे ५१
सन्त्येवात्र गृहे ८९
सा पत्युः प्रथमे २७
सा वाला वयमप्र ३२
सा यौवनमदो परिशिष्टे ५०
सालक्तकं शत परिशिष्टे २६
सालक्तकेन परिशिष्टे १४
सुतनु जहिहि ३७
सुरतविरतौ परिशिष्टे ५२
सुप्तोऽयं सखि ३५
सैवाहं प्रमदा ८७
स्फुटतु हृदयं ७१
स्मररसनदीपूरेणो परिशिष्टे २
स्वं दृष्टवा करजक्षतं ५३
स्विन्नं केन मुखं परिशिष्टे ११

( ह )

हारो जलार्द्र परिशिष्टे ३२
हारोऽयं हरिणा परिशिष्टे ३६

(इति पद्यानुक्रमणी)

अमरुशतकलीलानामा श्रीबाक्-
कन्बेप्रणीतोऽयं ग्रन्थः समाप्तः ।

# पाठान्तरसहितममरुशतकमूलम्

ज्याकृष्टिबद्धखटकामुखपाणिपृष्ठ-
प्रेङ्खन्नखांशुचयसंवलितोऽम्बिकायाः[1] ।
त्वां पातु मञ्जरितपल्लवकर्णपूर-
लोभभ्रमद्भ्रमरविभ्रमभृत्कटाक्षः ।।प्रारम्भे।।

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण ।
आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शांभवो वः शराग्निः ।।प्रारम्भे।।

आलोलामलकावलीं विलुलितां बिभ्रच्चलत्कुण्डलं
किंचिन्मृष्टविशेषकं तनुतरैः स्वेदाम्भसः[2] शीकरैः ।
तन्व्या यत्सुरतान्ततान्तनयनं वक्त्रं रतिव्यत्यये
तत्त्वां पातु चिराय किं हरिहरस्कन्दादिभिर्दैवतैः[3] ।।१।।

अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः
क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः ।
हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः
कथय सुकृती कोऽयं मुग्धे त्वयाद्य विलोक्यते ।।२।।

---

पाठाः

१. मृडान्याः २. स्वेदाम्भसां जालकैः
३. हरिहरब्रह्मादिभिर्दैवतैः

अङ्गुल्यग्रनखेन बाष्पसलिलं विक्षिप्य विक्षप्य किं
तूष्णीं रोदिषि कोपने बहुतरं फुत्कृत्य रोदिष्यसि ।
यस्यास्ते पिशुनोपदेशवचनैर्मानेऽतिभूमिं गते
निर्विण्णोऽनुनयं प्रति प्रियतमो मध्यस्थतामेष्यति ॥३॥

दत्तोस्याः प्रणयस्त्वयैव भवतैवेयं[1] चिरं लालिता
दैवादद्य किल त्वमेव कृतवानस्या नवं विप्रियम् ।
मन्युर्दुःसह एव[2] यात्युपशमं नो सान्त्ववादैः स्फुटं
हे निस्त्रिंश विमुक्तकण्ठकरुणं तावत्सखी रोदितु ॥४॥

लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो
निराहाराः सख्यः सततरुदितोच्छूननयनाः ।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै--
स्तवावस्था चेयं विसृज कठिने मानमधुना ॥५॥

नार्यो मुग्धशठा हरन्ति रमणं तिष्ठन्ति नो वारिता--
स्तत्किं ताम्यसि किं च रोदिषि मुधा तासां प्रियं मा कृथाः ।
कान्तः केलिरुचिर्युवा सहृदयस्तादृक्पतिः कातरे
किं नो बर्बरकर्कशैः प्रियशतैराक्रम्य विक्रीयते ॥६॥

---

पाठाः

१. भवता सेयं २. एष

कोपात्कोमललोलबाहुलतिकापाशेन बद्धवा दृढं
नीत्वा वासनिकेतनं[1] दयितया सायं[2] सखीनां पुरः।
भूयोऽप्येवमिति स्खलन्मृदुगिरा संसूच्य दुश्चेष्टितं
धन्यो हत्यत एव निह्नुतिपरः प्रेयान्रुदत्या हसन् ॥७॥

याताः किं न मिलन्ति सुन्दरि पुनश्चिता त्वया मत्कृते
नो कार्या नितरां कृशासि कथयत्येवं सबाष्पे मयि।
लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा
दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचिताः ॥८॥

तद्वक्त्राभिमुखं मुखं विनमितं दृष्टिः कृता पादयो--
स्तस्यालापकुतूहलाकुलतरे[3] श्रोत्रे निरुद्धे मया।
पाणिभ्यां च तिरस्कृतः सपुलकः स्वेदोद्गमो गण्डयोः
सख्य किं करवाणि यान्ति शतधा यत्कञ्चुके[4] संधयः ॥९॥

प्रहरविरतौ मध्ये वाह्नस्ततोऽपि परेण[5] वा
किमुत सकले याते वाह्नि प्रिय त्वमिहैष्यसि।
इति दिनशतप्राप्यं देशं प्रियस्य यियासतो
हरति गमनं बालालापैः[6] सबाष्पगलज्जलैः ॥१०॥

---

पाठाः

१. मोहनमन्दिरं २. स्वैर ३. तत्संल्लाप
४. मत्कञ्चुलीसंधयः ५. परेऽयवा
६. बालावाक्यैः सबाष्पझलज्झलैः

धीरं वारिधरस्य वारि किरतः श्रुत्वा निशीथे ध्वनिं
दीर्घोच्छ्वासमुदश्रुणा विरहिणीं बालां चिरं ध्यायता।
अध्वन्येन विमुक्तकण्ठमखिलां रात्रिं तथा क्रन्दितं
ग्रामीणैः पुनरध्वगस्य वसतिर्ग्रामे निषिद्धा यथा ।।११।।

कृतो दूरादेव स्मितमधुरमभ्युद्गमविधिः
शिरस्याज्ञा न्यस्ता प्रतिवचनवत्यानतिमति[1]।
न दृष्टे[2] शैथिल्यं मिलन इति चेतो दहति मे
निगूढान्तःकोपा[3] कठिनहृदये संवृतिरियम् ।।१२

कथमपि सखि क्रीडाकोपाद्व्रजेति मयोदिते
कठिनहृदयः शय्यां [4]त्यक्त्वा बलाद्गत एव सः ।
इति सरभसं [5]ध्वस्तप्रेम्णि व्यपेतघृणे स्पृहां
पुनरपि हतव्रीडं चेतः करोति करोमि किम् ।।१३।।

दंपत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वच
स्तत्प्रातर्गुरुसंनिधौ निगदतः श्रुत्वैव[6] तारं वधूः।
कर्णालम्बितपद्मरागशकलं विन्यस्य चञ्चूपुटे[7]
व्रीडार्ता प्रकरोति[8] दाडिमफलव्याजेन वाग्बन्धनम् ।।१४।।

---

पाठाः

१. प्रतिवचनमप्यालपसि च २. दृष्टिः शैथिल्यं भजत.
३. कोपे ४. त्यक्त्वा शय्यां
५. सरभसध्वस्त ६. तस्यातिमात्रं वधूः
७. चञ्च्वाः पुरो ८. विदधाति

अज्ञानेन पराङ्मुखीं परिभवादाश्लिष्य मां दुःखितां
किं लब्धं शठ दुर्नयेन नयता सौभाग्यमेतां दशाम् ।
पश्यैतद्दयिताकुचव्यतिकरोन्मृष्टाङ्गरागारुणं[1]
वक्षस्ते मलतैलपङ्कशबलैर्वेणीपदैरङ्कितम्[2] ।।१५।।

एकत्रासनसंस्थितिः[3] परिहृता प्रत्युद्गमाद्दूरत-
स्ताम्बूलाहरणच्छलेन[4] रभसाश्लेषोऽपि संविघ्नितः ।
आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके
कान्तं प्रत्यपचारतश्चतुरया कोपः कृतार्थीकृतः ।।१६।।

दृष्ट्वैकासनसंस्थिते[5] प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने निमील्य[6] विहितक्रीडानुबन्धच्छलः ।
ईषद्वक्रितकंधरः[7] सपुलकः[8] प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ।।१७।।

चरणपतनप्रत्याख्यानप्रसादपराङ्मुखे[9]
निभृतकितवाचारेत्युक्ते[10] रुषा परुषीकृते ।
व्रजति रमणे निःश्वस्योच्चैः स्तनार्पितहस्तया[11]
नयनसलिलच्छन्ना दृष्टिः[12] सखीषु निपातिता ।।१८।।

---

पाठाः

१. व्यतिकरासक्ताङ्ग २. मम तैलपङ्कमलिनैः
३. संगतिः ४. ताम्बूलानयनच्छलेन ५. संगते
६. पिधाय ७. तिर्यग्वक्रित ८. सपुलकप्रेमो
९. प्रत्याख्यानात् १०. त्युक्त्वा ११. स्तनाहित १२. क्लिन्ना

काञ्च्या गाढतरावनद्धवसनप्रान्ता किमर्थं पुन-
र्मुग्धाक्षी स्वपितीति तत्परिजनं स्वैरं प्रिये पृच्छति ।
मातः स्वप्तुमपीह[1] वारयति मामित्याहितक्रोधया
पर्यस्य स्वपनच्छलेन शयने दत्तोऽवकाशस्तया ।।१९।।

एकस्मिञ्शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यः कोपपराङ्मुखं[2] ग्लपितया चाटूनि कुर्वन्नपि ।
आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तेत्क्षणा-[3]
न्मा भून्म्लान[4] इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ।।२०।।

एकस्मिञ्शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
रन्योन्यं[5] हृदयस्थितेऽप्यनुनये संरक्षतोर्गौरवम् ।
दंपत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः सहासरभसं[6] व्यावृत्तकण्ठग्रहः ।।२१।।

पश्यामो मयि किं प्रपद्यत इति स्थैर्यं मयालम्बितं
किं मां नालपतीत्ययं खलु शठः कोपस्तयाप्याश्रितः ।
इत्यन्योन्यविलक्षदृष्टिचतुरे तस्मिन्नवस्थान्तरे
सव्याजं हसितं मया धृतिहरो बाष्पस्तु[7] मुक्तस्तया ।।२२।।

---

पाठाः

१. सुप्तिमपीह २. पराङ्गमुखग्लपितया ३. तत्क्षणम्
४. भूत्सुप्त ५. रन्योन्यस्य हृदि स्थिते
६. सहासरभसव्यावृत्तकण्ठग्रहम्

परिम्लाने माने मुखशशिनि तस्याः करधृते
मयि क्षीणोपाये प्रणिपतनमात्रैकशरणे ।
[1]तया पक्ष्मप्रान्तध्वजपुटनिरुद्धेन सहसा
प्रसादो बाष्पेण स्तनतटविशीर्णेन कथितः ।।२३।।

तस्याः सान्द्रविलेपनस्तनयुगश्लेषमुद्राङ्कितं[2]
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते[3] ।
इत्युक्ते क्व तदित्युदीर्य सहसा तत्संमार्ष्टुं मया
साश्लिष्टा रभसेन तत्सुखवशात्तस्याश्च[4] तद्विस्मृतम् ।।२४।।

त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं
लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि[5]
शय्योपान्तनिविष्टसस्मितवधूनेत्रोत्सवानन्दितो[6]
निर्यातः शनकैरलीकवचनोपन्यासमालीजनः ।।२५।।

भ्रूभङ्गे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते
रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते ।
कार्कश्यं गमितेऽपि चेतसि तनू रोमाञ्चमालम्बते
दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिञ्जने ।।२६।।

---

पाठाः

१. तदा पक्ष्मप्रान्तव्रजपुट २. स्तनतट
३. गोपायते ४. तन्व्या च ५. तद्वेणिका
६. सखी

सा[1] पत्यः प्रथमेऽपराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम् ।
स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलोदकैरश्रुभिः[2] ।।२७।।

भवतु विदितं व्यर्थालापैरलं प्रिय गम्यतां
तनुरपि न ते दोषोऽस्माकं विधिस्तु पराङ्मुखः ।
तव यदि तथारूढं प्रेम प्रपन्नमिमां दशां
प्रकृतितरले का नः पीडा गते हतजीविते ।।२८।।

उरसि निहितस्तारो हारः कृता जघने घने
कलकलवती काञ्ची पादौ रणन्मणिनूपुरौ ।
प्रियमभिसरस्येवं मुग्धे त्वमाहतडिण्डिमा
यदि किमधिकत्रासोत्कम्पं[3] दिशः समुदीक्षसे ।।२९।।

मलयमरुतां व्राता वाता विकासितमल्लिका-
परिमलभरो भग्नो ग्रीष्मस्त्वमुत्सहसे यदि ।
घन घटय[4] तं त्वं निःस्नेहं य एव निवर्तने
प्रभवति गवां किं नश्छिन्नं स एव धनंजयः ।।३०।।

---

पाठाः

१. प्राणेशप्रणयापराधसमये २. लुठल्लोलालकैः
३. त्रासोत्कम्पा ४. घटयितुं तं

प्रातःप्रातरुपागतेन जनिता निर्निद्रता चक्षुषो-
र्मन्दाया मम गौरवं[1] व्यपगतं प्रोत्पादितं लाघवम् ।
किं तद्यन्न[2] कृतं त्वया मरणभीर्मुक्ता मया गम्यतां
दुःखं तिष्ठसि यच्च पथ्यमधुना कर्तास्मि तच्छोष्यसि ।।३१।।

सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम् ।
साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रयैरपटवो जाताः स्म इत्यद्भुतम् ।।३२।।

प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं
धृत्या न क्षणमासितं[4] व्यवसितं चित्तेन गन्तुं पुरः ।
यातुं निश्चितचेतसि प्रियतमे सर्वे[1] समं प्रस्थिता
गन्तव्ये सति जीवित प्रियसुहृत्सार्थः किमु त्यज्यते ।।३३।।

संदष्टेऽधरपल्लवे सचकितं हस्ताग्रमाधुन्वती
मा मा मुञ्च शठेति कोपवचनैरानर्तितभ्रूलता ।
सीत्काराञ्चितलोचना सरभसं यैश्चुम्बिता मानिनी
प्राप्तं तैरमृतं श्रमाय मथितो मूढैः सुरैः सागरः ।।३४।।

---

पाठाः

१. गौरवव्यपनयादुत्पादितं
२. मुग्धेन कृतं त्वया रमणभीः
३. क्षणमास्थितं ४ सर्वैः समं प्रस्थितं

सुप्तोऽयं सखि सुप्यतामिति गताः सख्यस्ततोऽनन्तरं
प्रेमावेशितया मया तर[1]लया न्यस्तं मुखं तन्मुखे ।
ज्ञातेऽलीकनिमीलने नयनयोर्धूर्तस्य रोमाञ्चतो
लज्जासीन्मम तेन साप्यपहृता तत्कालयोग्यैः क्रमैः ।।३५।।

कोपो यत्र भ्रुकुटिरचना निग्रहो[2] यत्र मौनं
यत्रान्योन्यस्मितमनुनयो दृष्टिपातः[3] प्रसादः ।
तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं
त्वं पाद न्ते लुठसि न च मे मन्युमोक्षः खलायाः ।।३६।।

सुतनु जहिहि मौनं पश्च ादानतं मां
न खलु तव कदाचित्कोप एवंविधोऽभूत् ।
इति निगदति नाथे तिर्यगामीलिताक्ष्या
नयनजलमनल्पं मुक्तमुक्तं न किंचित् ।।३७।।

गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा[4]
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा[5] ।
मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि किं लीना विलीना नु किम् ।।३८।।

---

पाठा.

१. सरलया २. विग्रहो ३. यत्र दृष्टिः प्रसादः
४ प्रोद्भिन्न ५. काञ्चीप्रदेशाम्बरा

पटालग्ने पत्यौ नमयति मुखं जातविनया
हठाश्लेषं वाञ्छत्यपहरति गात्राणि निभृतम् ।
न[१] शक्नोत्याख्यातुं स्मितमुखसखीदत्तनयना
ह्रिया ताम्यत्यन्तः प्रथमपरिहासे नववधूः ॥३९॥

नापेतोऽनुनयेन यः प्रियसुहृद्वाक्यैर्न यः संहृतो
यो दीर्घं दिवसं विषह्य विषमं[२] यत्नात्कथंचिद्धृतः ।
अन्योन्यस्य हृते मुखे [३]निहितयोस्तिर्यक्कथंचिद्दृशो
स[४] द्वाभ्यामतिविस्मृतव्यतिकरो मानो विहस्योज्झितः ॥४०॥

गते [५]प्रेमाबन्धे प्रणयबहुमाने विगलिते
निवृत्ते सद्भावे जन इव जने गच्छति पुरः ।
तदुत्प्रेक्ष्योत्प्रेक्ष्य प्रियसखि गतांस्तांश्च दिवसान्न
जाने को हेतुर्दलति शतधा यन्न हृदयम् ॥४१॥

चिरविरहिणोरत्युत्कण्ठाश्लथीकृतगात्रयो[६]-
र्नवमिव जगज्जातं भूयश्चिरादभिनन्दतोः ।
[७]कथमपि दिने दीर्घे याते निशामधिरूढयोः
प्रसरति कथा बह्वी यूनोर्यथा न तथा रतिः ॥४२॥

---

पाठा. १. अशक्ता चाख्यातुं २. हृदये
३. विहितयोः ४. संबन्धे सपदि स्मितव्यतिकरे
५. प्रेमावेशे ६. रुत्कण्टार्त्या
७. कथमिव

दीर्घा वन्दनमालिका विरचिता दृष्टचैव नेन्दीवरैः
पुष्पाणां प्रकरः स्मितेन रचितो नो कुन्दजात्यादिभिः ।
[1]दत्तः स्वेदमुचा पयोधरभरेणार्घो[2] न कुम्भाम्भसा
स्वैरेवावयवैः प्रियस्य विशतस्तन्व्या कृतं मङ्गलम् ।।४३।।

कान्ते सागसि [3]शापिते प्रियसखीवेषं विधायागते
भ्रान्त्यालिङ्गय मया रहस्यमुदितं तत्संगमाकाङक्षया ।
मुग्धे [4]दुष्करमेतदित्यतितमामुद्दामहासं बला-
दाश्लिष्य च्छलितास्मि तेन कितवेनाद्य प्रदोषागमे ।।४४।।

आशङक्य प्रणतिं पटान्तपिहितौ पादौ करोत्यादरा-
द्व्याजेनागतमावृणोति हसितं न स्पष्टमुद्वीक्षते ।
मय्यालापवति प्रतीपवचनं सख्या [5]सहाभाषते
तन्व्यास्तिष्ठतु निर्भरप्रणयिता मानोऽपि रम्योदयः ।।४५।।

[6]यावन्त्येव पदान्यलीकवचनैरालीजनैः पाठिता
तावन्त्येव कृतागसो द्रुततरं संलप्य[7] पत्युः पुरः ।
[8]प्रारेभे परतो यथा मनसिजस्येच्छा तथा वर्तितुम्
प्रेम्णो मौग्ध्यविभूषणस्य सहजः कोऽप्येष कान्तः क्रमः ।।४६।।

---

पाठा.

१. दत्तम् २. अर्घ्यं ३. यातिते
४. दुष्कर एष इत्यतितरामुक्त्वा सहासं बलादालिङ्ग्य
५. समं भाषते ६. सा यावन्ति
७. व्याहृत्य ८. प्रारब्धा

दूरादुत्सुकमागते विवलितं संभाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने [1]कोपाञ्चितभ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं[2]
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥४७॥

अङ्गानामतितानवं कुत इदं [3]कस्मादकस्मादिदं
मुग्धे पाण्डुकपोलमाननमिति प्राणेश्वरे पृच्छति ।
तन्व्या सर्वमिदं स्वभावत इति व्याहृत्य पक्ष्मान्तर-
व्यापी बाष्पभरस्तया [4]वलितया निःश्वस्य मुक्तोऽन्यतः ॥४८॥

पुरस्तन्व्या गोत्रस्खलनचकितोऽहं नतमुखः
प्रवृत्तो वैलक्ष्यात्किमपि लिखितुं दैवहतकः ।
स्फुटो रेखान्यासः कथमपि स तादृक्परिणतो
गता येन व्यक्तिं पुनरवयवैः सैव तरुणी ॥४९॥

ततश्चाभिज्ञाय स्फुरदरुणगण्डस्थलरुचा
मनस्विन्या रूढप्रणयसहसोद्गद्गदगिरा ।
अहो चित्रं चित्रं स्फुटमिति निगद्याश्रुकलुषं
रुषा ब्रह्मास्त्रं मे शिरसि निहितो वामचरणः ॥५०॥

---

पाठा.

१. संकुञ्चितभ्रूलतम् २. पूर्णेक्षणाच्
३. कम्पश्च कस्मादयं ४. दयितया

कठिनहृदये मुञ्च भ्रान्तिं व्यलीककथाश्रितां[१]
पिशुनवचनैर्दुःखं नेतुं न युक्तमिमं जनम् ।
किमिदमथवा सत्यं मुग्धे त्वयाद्य विनिश्चितं
यदभिरुचितं तन्मे कृत्वा प्रिये सुखमास्यताम् ।।५१।।

रात्रौ वारिभरालसाम्बुदरवोद्विग्नेन जाताश्रुणा
पान्थेनात्मवियोगदुःखपिशुनं गीतं तथोत्कण्ठया ।
आस्तां जीवितहारिणः प्रवसनालापस्य संकीर्तनं
मानस्यापि जलाञ्जलिः सरभसं लोकेन दत्तो यथा ।।५२।।

स्वं दृष्टवा करजक्षतं मधुमदक्षीबाविचार्येर्ष्यया
गच्छन्ती क्व नु गच्छसीति विधृता बाला पटान्ते मया ।
प्रत्यावृत्तमुखी सबाष्पनयना मां[२] मुञ्च मुञ्चेति सा
कोपप्रस्फुरिताधरा यदवदत्तत्केन विस्मार्यते ।।५३।।

चपलहृदये किं स्वातन्त्र्यात्तथा गृहमागत-
श्चरणपतितः प्रेमार्द्रार्द्रः प्रियः समुपेक्षितः ।
तदिदमधुना यावज्जीवं निरस्तसुखोदया
रुदितशरणा दुर्जातानां सहस्व रुषां फलम् ।।५४।।

---

पाठा. १. कथाश्रयां २. सा मुञ्च मुञ्चेति मां

बाले नाथ विमुञ्च मानिनि रुषं रोषान्मया किं कृतं
खेदोऽस्मासु न मेऽपराध्यति भवान्सर्वेऽपराधा मयि ।
तत्किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते
नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते ।।५५।।

श्लिष्टः कण्ठे किमिति न मया मूढया प्राणनाथ-
श्चुम्बत्यस्मिन्वदनविनतिः किं कृता किं न दृष्टः ।
नोक्तः कस्मादिति नववधूचेष्टितं चिन्तयन्ती
पश्चात्तापं वहति तरुणी प्रेम्णि जाते रसज्ञा ।।५६।।

श्रुत्वा नामापि यस्य स्फुटघनपुलकं जायतेऽङ्गं समन्ता[१]-
द्दृष्ट्वा यस्याननेन्दुं भवति वपुरिदं चन्द्रकान्तानुकारि ।
तस्मिन्नागत्य कण्ठग्रहनिकटपदस्थायिनि प्राणनाथे
भग्ना मानस्य चिन्ता भवति मयि[२] पुनर्वज्रमय्यां कथंचित्[३] ।।५७।।

लाक्षालक्ष्म ललाटपट्टमभितः केयूरमुद्रा गले
वक्त्रे कज्जलकालिमा नयनयोस्ताम्बूलरागोऽपरः ।
दृष्ट्वा कोपविधायि मण्डनमिदं प्रातश्चिरं प्रेयसो
लीलातामरसोदरे मृगदृशः श्वासाः समाप्तिं गताः ।।५८।।

---

पाठा. १. जायते यत् २. मम ३. कदाचित्

लोलैर्लोचनवारिभिः[1] सशपथैः पादप्रणामैः प्रियै-
रन्यास्ता[2] विनिवारयन्ति कृपणा प्राणेश्वरं प्रस्थितम् ।
पुण्याहं[3] व्रज मङ्गलं सुदिवसं[4] प्रातः प्रयातस्य ते
यत्स्नेहोचितमीहितं प्रिय[5] मया तन्निर्गतः श्रोष्यसि ।।५९।।

लग्ना नांशुकपल्लवे भुजलता न द्वारदेशेऽर्पिता
नो वा पादयुगे स्वयं[6] निपतितं तिष्ठेति नोक्तं वचः ।
काले केवलमम्बुदालिमलिने गन्तुं प्रवृत्तः शठ-
स्तन्व्या बाष्पजलौघकल्पितनदीपूरेण रुद्धः प्रियः ।।६०।।

आस्तां विश्वसनं सखीषु विदिताभिप्रायसारे जने
तत्राप्यर्पयितुं दृशं सुरचितां[7] शक्नोमि न व्रीडया ।
लोकोऽप्येष परोपहासचतुरः सूक्ष्मेङ्गितज्ञोऽप्यलं
मातः कं शरणं व्रजामि हृदये जीर्णोऽनुरागानलः ।।६१।।

न जाने संमुखायाते प्रियाणि वदति प्रिये ।
सर्वाण्यङ्गानि किं यान्ति नेत्रतां किमु कर्णताम् ।।६२।।

---

पाठा. १. वान्तैः २. रन्यैःता ३. धन्याहं
४. सुदिवसः ५. प्रियतम त्वं निर्गतः
६. मुहुः ७. सललितां

अनल्पचिन्ताभरमोहनिश्चला
विलोक्यमानैव करोति साध्वसम् ।
स्वभावशोभानतिमात्रभूषणा
तनुस्तवेयं बत किं नु सुन्दरि ॥६३॥

इति प्रिये पृच्छति मानविह्वला
कथंचिदन्तर्धृतबाष्पगद्गदम् ।
न किंचिदित्येव जगाद यद्वधूः
कियन्न तेनैव तयास्य वर्णितम् ॥६४॥

विरहविषमः कामो वामस्तनूकुरुते[१] तनुं
दिवसगणनादक्षश्चायं[२] व्यपेतघृणो यमः ।
त्वमपि वशगो मानव्याधेर्विचिन्तय नाथ हे
किसलयमृदुर्जीवेदेवं कथं प्रमदाजनः ॥६५॥

पादासक्ते सुचिरमिह ते वामता कैव[३] मुग्धे
मन्दारम्भे प्रणयिनि जने कोऽपराधोपरोधः[४] ।
इत्थं तस्याः परिजनकथाकोमले[५] कोपवेगे
बाष्पोद्भेदैस्तदनु सहसा न स्थितं न प्रवृत्तम् ॥६६॥

---

पाठा. १. कामं तनुं कुरुते २. दक्षः स्वैरं
३. नैव कान्ते ४. कोपने कोऽपराधः
५. परिजनगिरा कोपवेगे प्रशान्ते

तथाभूदस्माकं[१] प्रथममविभक्ता[२] तनुरियं
ततो[३] न त्वं प्रेयानहमपि हताशा प्रियतमा ।
इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं
मयाप्तं[४] प्राणानां कुलिशकठिनानां फलमिदम् ।।६७।

मुग्धे मुग्धतयैव नेतुमखिलः[५] कालः किमारभ्यते
मानं धत्स्व धृतिं बधान ऋजुतां दूरे कुरु प्रेयसि ।
सख्यैवं[६] प्रतिबोधिता प्रतिवचस्तामाह भीतानना
नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ।।६८।।

क्व प्रस्थितासि करभोरु घने निशीथे
प्राणाधिको[७] वसति यत्र जनः[८] प्रियो मे ।
एकाकिनी बत[९] कथं न बिभेषि बाले
नन्वस्ति पुङ्खितशरो मदनः सहायः ।।६९।।

लीलातामरसाहतोऽन्यवनितानिःशङ्कदृष्टाधरः
कश्चित्केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः ।
मुग्धा[१०] कुड्मलिताननेन्दु ददती वायुं स्थिता तत्र सा
भ्रान्त्या धूर्ततयाथवा[११] नतिमृते तेनानिशं[१२] चुम्बिता ।।७०।।

---

पाठा. १. पुरा २. अविच्छिन्ना ३. ततोऽनु त्वं प्रेयान्
वयमपि हताशाः प्रियतमाः ४. हतानां
५. अखिलं ६. सख्येदं ७. प्राणेश्वरः
८. मनःप्रियो ९. वद
१०. कान्ता कुड्मलिताननेन ११. तदा
१२. तेनाभवच्

स्फुटतु हृदयं कामः कामं करोतु तनुं तनुं
न सखि चपलप्रेम्णा कार्यं पुनर्दयितेन मे ।
इति सरभसं मानावेशादुदीर्य[1] वचस्तया
रमणपदवी सारङ्गाक्ष्या निरन्तरमीक्षिता[2] ।।७१।।

गाढाश्लेषविशीर्णचन्दनरजःपुञ्जप्रकर्षादियं[3]
शय्या संप्रति कोमलाङ्गि परुषेत्यारोप्य मां वक्षसि ।
गाढौष्ठग्रहपूर्वमाकुलतया[4] पादाग्रसंदंशके-
नाकृष्याम्बरमात्मनो यदुचितं धूर्तेन तत्प्रस्तुतम् ।।७२।।

कथमपि कृतप्रत्याख्याने[5] प्रिये स्खलितोत्तरे
विरहकृशया कृत्वा व्याजं प्रकल्पितमश्रुतम् ।
असहनसखीश्रोत्र प्राप्तिप्रमादससंभ्रमं[6]
विगलितदृशा[7] शून्ये गेहे समुच्छ्वसितं पुनः ।।७३।।

आदृष्टिप्रसरात्प्रियस्य पदवीमुद्वीक्ष्य निर्विण्णया
विच्छिन्नेषु[8] पथिष्वहःपरिणतौ ध्वान्ते समुत्सर्पति ।
दत्त्वैकं सशुचा गृहं प्रति पदं पान्थस्त्रियास्मिन्क्षणे
मा भूदागत इत्यमन्दवलितग्रीवं पुनर्वीक्षितम् ।।७४।।

---

पाठा. १. कोपाटोपादुदीर्य २. सशङ्कितमी०
३. पश्याश्लेष० ४. पीडनाकुलतया
५. कृतप्रत्यापत्तौ ६. प्राप्ति विशङ्क्य ससंम्रमं
७. विवलितदृशा ८. विश्रान्तेषु

आयाते दयिते मनोरथशतैर्नीत्वा कथंचिद्दिनं
वैदग्ध्यापगमाज्जडे[१] परिजने दीर्घां कथां कुर्वति ।
दष्टास्मीत्यभिधाय सत्वरपदं व्याधूय चीनांशुकं[२]
तन्वङ्ग्या रतिकातरेण मनसा नीतः प्रदीपः शमम् ।।७५।।

आलम्ब्याङ्गणवाटिकापरिसरे[३] चूतद्रुमे मञ्जरीं
सर्पत्सान्द्रपरागलम्पटरटद्भृंगाङ्गनाशोभिनीं[४] ।
मन्ये स्वां तनुमुत्तरीयशकलेनाच्छाद्य बाला स्फुर-
त्कण्ठध्वाननिरोधकम्पितकुचश्वासोद्गमा रोदिति ।।७६।।

यास्यामीति समुद्यतस्य गदितं विस्रब्धमाकर्णितं
गच्छन्दूरमुपेक्षितो मुहुरसौ व्यावृत्य तिष्ठन्नपि ।
तच्छून्ये पुनरास्थितास्मि भवने प्राणास्त एत दृढाः
सख्यस्तिष्ठत जीवितव्यसनिनी दम्भादहं रोदिमि ।।७७।।

अनालोच्य प्रेम्णः परिणतिमनादृत्य सुहृद-
स्त्वयाकाण्डे मानः किमिति सरले[५] संप्रति कृतः ।
समाकृष्टा ह्येते प्रलयदहनोद्भासुरशिखाः
स्वहस्तेनाङ्गारास्तदलमधुनारण्यरुदितैः ।।७८।।

---

पाठा. १. गत्वा वासगृहे जडे २. चेलाञ्चलं
३. वापिका. ४. रणद् ५. तरले

कपोले पत्राली करतलनिरोधेन मृदिता
निपीतो निःश्वासैरयममृतहृद्योऽधररसः ।
मुहुः कण्ठे लग्नस्तरलयति बाष्पः स्तनतटं[1]
प्रियो मन्युर्जातस्तव निरनुरोधे न तु वयम् ।।७९।।

शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला[2] चिरं चुम्बिता ।।८०।।

लोलद्भ्रूलतया[3] विपक्षदिगुपन्यासेऽवधूतं[4] शिर-
स्तद्वृत्तान्तविदीक्षणे[5] कृतनमस्कारो विलक्षः स्थितः ।
कोपात्ताम्रकपोलभित्तिनि[6] मुखे दृष्ट्या गतः पादयो-
रुत्सृष्टो गुरुसंनिधावपि विधिर्द्वाभ्यां न कालोचितः ।।८१।।

जाता नोत्कलिका स्तनौ न लुलितौ गात्रं न रोमाञ्चितं
वक्त्रं स्वेदकणान्वितं न सहसा यावच्छठेनामुना ।
दृष्टेनैव मनो हृतं धृतिमुषा प्राणेश्वरेणाद्य मे
तत्केनात्र निरूप्यमाणनिपुणो मानः समाधीयताम् ।।८२।।

---

पाठा. १. स्तनतटीं २. बालाभवच्चुम्बिता
३. लोलभ्रूलतया ४. विधूतं
५. निरीक्षणे ६. ईषत्ताम्रकपोलकान्तिनि मुखे
दृष्ट्या नताः

दृष्टः कातरनेत्रया चिरतरं बद्ध्वाञ्जलिं[1] याचितः
पश्चादंशुकपल्लवेन[2] विधृतो निर्व्याजमालिङ्गितः ।
इत्याक्षिप्य[3] यदा समस्तमघृणो गन्तुं प्रवृत्तः शठः
पूर्वं प्राणपरिग्रहो दयितया मुक्तस्ततो वल्लभः ॥८३॥

तप्ते महाविरहवह्निशिखावलीभि-
रापाण्डुरस्तनतटे हृदये प्रियायाः ।
मन्मार्गवीक्षणनिवेशितदीनदृष्टे-
र्नूनं छमच्छमिति बाष्पकणाः पतन्ति ॥८४॥

चिन्तामोहविनिश्चलेन[4] मनसा मौनेन पादानतः
प्रत्याख्यानपराङ्मुखः[5] प्रियतमो गन्तुं प्रवृत्तोऽधुना[6] ।
सव्रीडैरलसैर्निरन्तरलुठद्बाष्पाकुलैरीक्षणैः
श्वासोत्कम्पिकुचं[7] निरीक्ष्य सुचिरं जीवाशया वारितः ॥८५॥

म्लानं पाण्डु कृशं वियोगविधुरं लम्बालकं सालसं[8]
भूयस्तत्क्षणजातकान्ति रभसप्राप्ते[9] मयि प्रोषिते ।
साटोपं रतिकेलिकालसरसं[10] रम्यं किमप्यादरा-
[11]द्यत्पीतं सुतनोर्मया वदनकं[12] वक्तुं न तत्पार्यते ॥८६॥

---

पाठा. १. बद्धाञ्जलिं   २. पल्लवे च
३. इत्याक्षिप्य समस्तमवमघृणो
४. चिन्तामोहनिबध्यमानमनसा
५. प्रत्याख्यात ६. प्रवृत्तः शठः
७. तन्वङ्ग्या स पुनस्तथा तरलया तत्रान्तरे वारितः
८. चालसं ९. मधुरं प्राप्ते १०. दत्तरभसं
११. त्पीतं यत् १२. मुखमिदं तत्केन विस्मार्यते

सैवाहं प्रमदा नृणामधिगतावेतौ च तौ नूपुरा-
वेषास्माकमवत्तिरेव सहजव्रीडाधनः स्त्रीजनः ।
इत्थं लज्जितया स्मृतेरूपगमे मत्वा तनुं संभ्रमा-
त्पुंभावः प्रथमं रतिव्यतिकरे मुक्तस्ततो वल्लभः ॥८७॥

करकिसलयं धूत्वा धूत्वा विमार्गति[१] वाससी
क्षिपति सुमनोमालाशेषं प्रदीपशिखां प्रति ।
स्थगयति मुहुः पत्युर्नेत्रे विहस्य समाकुला
सुरतविरतौ रम्या[२] तन्वी मुहुर्मुहुरीक्षते ॥८८॥

सन्त्येवात्र गृहे गृहे युवतयस्ताः पृच्छ गत्वाधुना
प्रेयांसः प्रणमन्ति किं तव पुनर्दासो यथा वर्तते ।
आत्मद्रोहिणि दुर्जनैः[३] प्रलपितं कर्णेऽनिशं मा कृथा-
श्छिन्नस्नेहरसा भवन्ति पुरुषा दुःखानुवर्त्याः[४] पुनः ॥८९॥

निःश्वासा वदनं दहन्ति हृदयं निर्मूलमुन्मथ्यते[५]
निद्रा नैति न दृश्यते प्रियमुखं नक्तंदिवं रुद्यते ।
अङ्गं शोषमुपैति पादपतितः प्रेयांस्तदोपेक्षितः[६]
सख्यः कं गुणमाकलय्य दयिते मानं वयं कारिताः ॥९०॥

---

पाठा. १. विलम्बितमेखला २. रम्यं तन्वी पुनः पुनरीक्षते
३. दुर्जनप्रलपितं कर्णे भृशं
४. दुःखानुवृत्त्या यतः ५. उन्मूल्यते
६. तथा

अद्यारभ्य यदि[1] प्रिये पुनरहं मानस्य वाऽन्यस्य वा
गृह्णीयां शठदुर्नयेन मनसा नामापि संक्षेपतः ।
तत्तेनैव[2] विना शशाङ्कधवलाः[3] स्पष्टाट्टहासा निशा
[4]एको वा दिवसः पयोदमलिनो यायान्मम प्रावृषि ॥९१॥

इदं कृष्णं कृष्णं प्रियतम ननु श्वेतमथ किं
गमिष्यामो यामो भवतु गमनेनाथ भवतु ।
पुरा येनैवं मे चिरमनुसृता चित्तपदवी
स एवान्यो जातः सखि परिचिताः कस्य पुरुषाः ॥९२॥

चरणपतनं सख्यालापा[5] मनोहरचाटवः
कृशतरतनोर्गाढाश्लेषो हठात्परिचुम्बनम् ।
इति हि[6] चपलो मानारम्भस्तथापि हि[7] नोत्सहे
हृदयदयितः कान्तः कामं किमत्र करोम्यहम् ॥९३॥

तन्वङ्ग्या गुरुसंनिधौ नयनयोर्यद्वारि संस्तम्भितं
तेनान्तर्गलितेन मन्मथशिखी सिक्तो वियोगोद्भवः ।
मन्ये तस्य निरस्यमानकिरणस्यैषा मुखेनोद्गता
श्वासायाससमाकुलालिसरणिव्याजेन धूमावली ॥९४॥

---

पाठा. १. नहि प्रिये पुनरहं मानस्य वा भाजनं गृह्णीयां
विषरूपिणः शठमतेर्नामापि
२. किं तेनैव ३. शशाङ्ककिरणस्पष्टाट्टहासा
४. नैकोऽपि ५. सास्रालापाः ६. बहुफलो
७. च

भ्रूभेदो गुणितश्चिरं नयनयोरभ्यस्तमामीलनं
रोद्धुं शिक्षितमादरेण हसितं मानेऽभियोगः कृतः ।
धैर्यं कर्तुमपि स्थिरीकृतमिदं चेतः कथंचिन्मया
बद्धो मानपरिग्रहे परिकरः सिद्धिस्तु दैवे स्थिता ॥९५॥

अहं तेनाहूता किमपि कथयामीति विजने
समीपे चासीना सरसहृदयत्वादवहिता ।
ततः कर्णोपान्ते किमपि वदताघ्राय वदनं
गृहीता[1] धम्मिल्ले सखि स च मया गाढमधरे ॥९६॥

देशैरन्तरिता शतैश्च सरितामुर्वीभृतां काननै-
र्यत्नेनापि न याति लोचनपथं कान्तेति जानन्नपि ।
उद्ग्रीवश्चरणार्धरुद्धवसुधः[2] प्रोन्मृज्य सास्रे दृशौ
तामाशां पथिकस्तथापि[3] किमपि ध्यायन्पुनर्वीक्षते[4] ॥९७॥

चक्षुःप्रीतिप्रसक्ते[5] मनसि परिचये चिन्त्यमानाभ्युपाये
रागे[6] यातेऽतिभूमिं विकसति सुतरां गोचरे दूतिकायाः ।
आस्तां दूरेण[7] तावत्सरभसदयितालिङ्गनानन्दलाभ-
स्तद्गेहोपान्तरथ्याभ्रमणमपि परां निर्वृतिं संतनोति ॥९८॥

---

पाठा १. गृहीत्वा धम्मिल्लं मम सखि निपीतोऽधररसः
२. चरणाग्र. ३ तथैव ४ मुहर्
५. चक्षुःप्रीत्या निषण्णे मनसि परिचयाच्चीन्त्यमाने
६. याते रागे विवृद्धिं प्रविसरति गिरां विस्तरे
७. दूरे स

कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धना[1]
द्वासो विश्लथमेखलागुणधृतं किंचिन्नितम्बे स्थितम् ।
एतावत्सखि वेद्मि सांप्रतमहं[2] तस्याङ्गसङ्गे पुनः
कोऽयं कास्मि रतं नु[3] वा कथमिति स्वल्पापि मे न स्मृतिः ।।९९।।

प्रासादे सा दिशि दिशि च सा पृष्ठतः सा पुरः सा
पर्यङ्के सा पथि पथि च सा तद्वियोगातुरस्य ।
हंहो चेतः प्रकृतिरपरा नास्ति मे कापि सा सा
सा सा सा सा जगति सकले कोऽयमद्वैतवादः ।।१००।।

पाठा. १. तत्क्षणात्तद्वासः श्लथमेखला
२. केवलमहं ३. तु किं कथमपि

शान्तिरस्तु लोके !

पुनःसंयोगोऽस्तु द्विधाविभक्तस्य कोरियादेशस्य !



संस्कृतिः संस्कृताश्रिता ।

संस्कृत-सभायाः सुबोध-सरल-सरसं पाक्षिकं मुखपत्रम्

# "भारतवाणी"

( स्थापना—१९५८ )

जानेवारी (१९६७) मासे दशमे वर्षे पदं कृतम् ।

## संपादक-मण्डलम्

प्रा. डॉ. व. ग. राहूरकर (प्रधान-संपादकः)

वार्षिकं मूल्यम् रु. ५—०—०


-- कार्यालयः --

प्रा. डॉ. व. ग. राहूरकर

१४४२–४३ सदाशिव, पुणें २.

व्यवस्थापकः भारतवाणी-कार्यालयः